# HITOPADEŚA

OF

NĀRĀYAṆA

*Edited with*

*A Sanskrit commentary Marma-Prakāśikā and notes in English*

M.R. KALE



MOTILAL BANARSIDASS PUBLISHERS
PRIVATE LIMITED • DELHI

*Sixth Edition: Delhi, 1967*
*Reprinted: Delhi, 1976, 1985, 1989, 1998*



ISBN: 81-208-0602-6

*Also available at:*

**MOTILAL BANARSIDASS**

41 U.A. Bungalow Road, Jawahar Nagar, Delhi 110 007
8, Mahalaxmi Chamber, Warden Road, Mumbai 400 026
120 Royapettah High Road, Mylapore, Chennai 600 004
Sanas Plaza, Subhash Nagar, Pune 411 002
16 St. Mark's Road, Bangalore 560 001
8 Camac Street, Calcutta 700 017
Ashok Rajpath, Patna 800 004
Chowk, Varanasi 221 001

PRINTED IN INDIA

BY JAINENDRA PRAKASH JAIN AT SHRI JAINENDRA PRESS,
A-45 NARAINA, PHASE I, NEW DELHI 110 028
AND PUBLISHED BY NARENDRA PRAKASH JAIN FOR
MOTILAL BANARSIDASS PUBLISHERS PRIVATE LIMITED,
BUNGALOW ROAD, DELHI 110 007

## THE THIRD EDITION.

In reprinting the book for this edition, some better readings have been adopted in the text and some alterations and additions made in the commentary. A full translation of the text, too, has been added at the special request of the publishers. The students, however, are strictly warned not to use the translation at once. They should try a passage first by themselves and then refer to the translation as a help, but never learn it by rote. The notes also have been carefully revised.

1st October, 1910. M. R. Kale.

---

## PREFACE TO THE SIXTH EDITION.

The present edition is more or less reprint of fifth edition. Opportunity however is taken to correct references to pages of Text in notes. I have also shown in the margin of the translation pages of text and number of certain ślokas in the text, for ready reference of readers. M/s. Motilal Banarsidass, the publisher are responsible to publish this edition of the work of Late Shri M. R. Kale, B.A.; which was not available for a pretty long period and I sincerely thank them for their efforts.

25-B, Goodwill Building.
Bombay-16 (DD). V. M. Kale.
15th Aug. 1967.

## PREFACE TO THE FIRST EDITION.

India is now acknowledged to be the motherland of Fable Literature as she is of almost every other branch of knowledge. Sir William Jones writing as far back as in February 1786, thus expresses himself on the subject :—

"Their (the Hindoos') Nīti-Śāstra, or System of Ethics, is yet preserved, and the fables of Vishṇu-Śarmā, whom we ridiculously call Pilpay, are the most beautiful, if not the most ancient, collection of apologues in the world. They were first translated from the Sanskrit, in the sixth century, by Buzerchumihr, or "Bright as the Sun," the chief physician, and afterwards the Vizier of the great Anushirwan, and are extant under various names in more than twenty languages; but their original title is Hitopadeśa, or "Amicable Instruction," and as the very existence of Æsop, who the Arabs believe to have been an Abyssinian, appears rather doubtful, I am not disinclined to suppose that the first moral fables which apeared in Europe were of Indian or Ethiopian origin." For a full account of the wanderings of the stories of Vishṇuśarman (the Pañchatantra) into and through the different countries of Asia and Europe, the student is referred to C. Wilkins' preface to his translation of the Hitopadeśa.

The Hitopadeśa belongs to that class of compositions which aim at teaching the principles of polity guided by morality as far as possible, presenting them in the more agreeable form of stories. The Pañchatantra of Vishṇuśarman referred to above is its immediate parent, though the work of Kāmandaka has been largely drawn upon, and there are occasional quotations from the Mah. Bhar. and other works. The object of the compendium is, as the author himself tells us, to train the young minds in the chief affairs of life by acquainting them with the accumulated experiences of past ages. "It (the Hitopadeśa) comes to us," says Prof. H. Morley in his introduction to Wilkins' translation of the Hitopadeśa, "from a far place and time, as a manual of worldly wisdom, inspired throughout by the religion of its place and time. There are in fact, so far as concerns the great forces of nature, but accidental differences between the cities of men or the ant-hills of today and yesterday. When allowance has been made for some real progress in civilization, as in the recognition of the place of women in society, every fable in the Hitopadeśa can still be applied to human character; every maxim quoted from the wise

men of two or three thousand years ago, when parted from the local accidents of form, might find its time for being quoted now in Church, at home, or upon "Change."

The present edition of the Hitopadeśa is specially prepared for High School students into whose hands it is often placed as one of the books intended for beginners. All difficult words and expressions have been explained in easy Sanskrit and English. A few ślokas have been interpreted in a new way and an attempt has been made to give a meaning to a few quotations from Kāmandaka, hitherto given up by commentators as knotty. All thanks are due to Dr. Peterson for discovering the fact that Nārāyaṇa and not Vishṇuśarman, as popularly supposed till now, is the real author of the present work, I am indebted to the learned Doctor for the last two ślokas as well as for a few readings which I have adopted from his edition of the Hitopadeśa and which appeared decidedly to improve the sense. I hope the work will be found really useful by those for whom it is intended.

1st May, 1896. M. R. Kale.

---

CONTENTS

# हितोपदेशः ।

## ॥ प्रस्ताविका ॥

सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला ॥ १ ॥
श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥ २ ॥
अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ३ ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ४ ॥
संयोजयति विद्यैव नीचगापि नरं सरित् ।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥ ५ ॥
विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ६ ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥
यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥ ८ ॥

---

हितस्य उपदेशः हितोपदेशः । हितश्चासौ उपदेशश्च इति वा । स एव लक्षणया तत्संज्ञः ग्रन्थः । धूः भारभूता जटा यस्य असौ धूर्जटिः । तस्य धूर्जटेः प्रसादात् सतां साध्ये अभिमतविषये सिद्धिः अस्तु । यन्मूर्ध्नि–यस्य मूर्धा यन्मूर्धा तस्मिन् । जाह्नवीफेनलेखेव–जह्नोः अपत्यं स्त्री जाह्नवी तस्याः फेनस्य लेखा । श्रुतः सम्यगधीतः इत्यर्थः । पाटवं–पटोः भावः । वैचित्र्यं–विचित्रस्य भावः । नीतिविद्यां–नीतिशास्त्रज्ञानम् । अजरामरवत्–जरायाः निष्क्रान्तः अजरः, नास्ति जरा यस्य इति वा । न म्रियते असौ अमरः । अजरः च असौ अमरः च अजरामरः तेन तुल्यम् । अनुत्तमम्–नास्ति उत्तमं यस्मात् । अहार्यत्वात्–हर्तुं योग्यं शक्यं वा न भवतीति अहार्यं तस्य भावः अहार्यत्वम् । एवं अनर्घ्यत्वादि । विद्या एव नीचगापि [ सती ] नरं दुर्धर्षं नृपं संयोजयति नीचगापि सरित् दुर्धर्षं समुद्रमिव । दुर्दर्शमितिपाठः । अतः नृपात्समुद्राच्च परं महत् भाग्यं अतःपरं नरस्य भाग्यमिति वा । विद्येति–अत्र कारणमालालंकारः । तल्लक्षणं यथा–यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता । तदा कारणमाला स्यात् । का. प्र. १०, ( साहि. द. १०.७६. ) शस्त्रस्य विद्या, शास्त्रस्य विद्या, एते द्वे विद्ये प्रतिपत्तये कीर्तये भवतः । यथा नवे भाजने आमभाजने इत्यर्थः । लग्नः संस्कारः अन्यथा न भवेत् स्वस्थानात्प्रच्यावयितुं प्रमार्ष्टुं वा न शक्यते तथा बाला अपि नीतिमध्यापिताश्चेत्सा तेषां चेतसि दृढं पदं कुर्यादिति हेतोः सा कथामिषेण बालानामिह

---



१ साधयत् इ. पा.

मित्रलाभः सुहृद्भेदो विग्रहः संधिरेव च ।
पञ्चतन्त्रात्तथान्यस्माद्ग्रन्थादाकृष्य लिख्यते ॥ ९ ॥

अस्ति भागीरथीतीरे पाटलिपुत्रनामधेयं नगरम् । तत्र सर्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत् । स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव—

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ १० ॥

यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ११ ॥

इत्याकर्ण्यात्मनः पुत्राणामनधिगतशास्त्राणां नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास—

कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
काणेन चक्षुषा किंवा चक्षुःपीडैव केवलम् ॥ १२ ॥

अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ १३ ॥

किं च । स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥ १४ ॥

गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी नाम ॥ १५ ॥

दाने तपसि शौर्ये च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ १६ ॥

अपरं च । वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ १७ ॥

पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् ।
तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ १८ ॥

अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन् ॥ १९ ॥

---

कथ्यते । सर्वस्वामि०– स्वामिनः गुणाः स्वामिगुणाः । सर्वे च ते स्वामिगुणाश्च ( कर्म ) तैः उपेतः । ( तृ. त. ) सुदर्शनः–शोभनं दर्शनं यस्य ( बहु. )। अनेकसं०–अनेके च ते संशयाः तान् उच्छेत्तुं शीलमस्य । परोक्षार्थस्य–अक्ष्णोः परः परोक्षः तस्य । यौवनेति–वयोरूपविभूतीनामेकैकं मदकारणम् । इति समानार्थः श्लोकांशः रघुवंशे ( स. १७. श्लो. ४३ ). अनधिगत०–अनधिगतानि अनधीतानि शास्त्राणि यैः । उन्मार्गगामिनां–उद्गतः मार्गः उन्मार्गः तेन गन्तुं शीलं येषाम् । शास्त्राननुष्ठानेन–शास्त्रस्य अननुष्ठानं शास्त्राज्ञोल्लंघनं तेन स्वैरवर्तनेन इति यावत् । सकृदेकवारम् । गुणिगण०– गुणाः एषां विद्यन्ते इति गुणिनः तेषां गणः तस्य गणना तस्याः आरम्भे । कठिनी—कनिष्ठिका । गुणिगणगणनारम्भे यस्य [ पुत्रस्य कृते ] कठिनी सुसंभ्रमात् न पतति तेन पुत्रेण यदि अम्बा तज्जननी सुतिनी प्रशस्तपुत्रवती भवेत् तर्हि वंध्या कीदृशी नाम भवेत् इति शेषः । यस्याः पुत्रः गुणिनां न धुरीणः सा वन्ध्या एव इति भाव. । पुण्यतीर्थे–पुण्यं च तत् तीर्थं च तस्मिन् । कर्म० । अर्थस्य आगमः प्राप्तिः । प्रिया भर्तुरभिमता । तेन भर्तुरनुरागिता तृतीयं सुखम् ।

---

१ भवति इ. पा.

को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः ।
वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥ २० ॥
ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ २१ ॥
अनभ्यासे विषं विद्या अजीर्णे भोजनं विषम् ।
विषं सभा दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ २२ ॥
यस्य कस्य प्रसूतोऽपि गुणवान्पूज्यते नरः ।
धनुर्वंशविशुद्धोपि निर्गुणः किं करिष्यति ॥ २३ ॥
हा हा पुत्रक नाधीतं सुगतैतासु रात्रिषु ।
तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥ २४ ॥

तत्कथमिदानीमेते मम पुत्रा गुणवंतः क्रियन्ताम् । यतः ।

आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥ २५ ॥

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६ ॥

यच्चोच्यते—आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ २७ ॥

किं च । अवश्यं भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥ २८ ॥

अपि च । यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ २९ ॥

एतत्कार्याक्षमाणां केषांचिदालस्यवचनम् ।

न दैवमपि संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन तैलानि तिलेभ्यो नाप्तुमर्हति ॥ ३० ॥

अन्यच्च । उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ ३१ ॥

---

प्रियवादिनी भार्या चतुर्थं सुखम् । म. भा. उ. ३३.८२. कुशूला०—आपूरयन्ति इति आपूरणाः । कुशूलस्य आपूरणाः ते च ते आढकाः च । केवलं विशिष्टसंख्यापूरकैः न तु गुणमण्डितैः इत्यर्थः । धनुरित्या०—वंशविशुद्धोपि उत्तमवंशनिर्मितोपि धनुः निर्गुणः निर्ज्यः चेत् किं करिष्यति । पक्षे धनुर्वंशविशुद्धोपि विशुद्धक्षत्रियवंशसंभवोपि कश्चित् निर्गुणः क्षत्रियजातिसहजधैर्यादिगुणरहितः चेत् किं करिष्यति । सुगत—शोभनं गतमायुःक्रमः अस्यास्तीति तस्य सम्बुद्धिः । आयुः आयुर्मर्यादा इति यावत् । चिन्ताविषघ्नः—चिन्ता एव विषं तत् हन्ति इति चिन्ताविषघ्नः । न गदः अस्मात् इति अगदः । पुरुषसिंहं—पुरुषश्रेष्ठम् । समासोत्तरपदे सिंहादिशब्दाः श्रेष्ठार्थवाचका भवन्ति । स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुंजराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ इत्यमरः । आत्मशक्त्या—आत्मशक्तिमवलम्ब्य इत्यर्थः । यत्ने कृते इ०—यत्ने कृते अपि यदि कार्यं न सिद्ध्यति तर्हि अत्र अस्मिन् विषये कर्तुः कः दोषः न कश्चिदपि । यद्वा यत्ने कृते यदि कार्यं न सिद्ध्यति तर्हि अत्र को मे

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ ३२ ॥

तथा च । पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात्पुरुषकारेण यत्नं कुर्यादतन्द्रितः ॥ ३३ ॥
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ३४ ॥
काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ३५ ॥
उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३६ ॥
मातापितृकृताभ्यासो गुणितामेति बालकः ।
न गर्भच्युतिमात्रेण पुत्रो भवति पण्डितः ॥ ३७ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ३८ ॥
रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ३९ ॥
मूर्खोऽपि शोभते तावत्सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ४० ॥

एतच्चिन्तयित्वा स राजा पण्डितसभां कारितवान् । राजोवाच–भो भोः पण्डिताः श्रूयताम् । अस्ति कश्चिदेवंभूतो विद्वान्यो मम पुत्राणां नित्यमुन्मार्गगामिनामनधिगतशास्त्राणामिदानीं नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः । यतः ।

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ ४१ ॥

उक्तं च । हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ४२ ॥

अत्रान्तरे विष्णुशर्मनामा महापण्डितः सकलनीतिशास्त्रतत्त्वज्ञो बृहस्पतिरिवाब्रवीत्—देव महाकुलसंभूता एते राजपुत्राः । तन्मया नीतिं ग्राहयितुं शक्यन्ते । यतः ।

नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् ।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ४३ ॥

अन्यच्च । अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ ४४ ॥

---

दोषः इति कर्त्रा विचारणा कार्या । कार्यसिद्धेः उद्यमायत्तत्वात् कार्यविपत्तेश्च दोषं विना असंभवात् । अतन्द्रितः–तन्द्रा अस्य संजाता असौ तन्द्रितः न तन्द्रितः अतन्द्रितः । कर्ता कुलालः । आत्मकृतं कर्म–कर्मफलं इति यावत् । काकतालीयवत्—अकस्मात् । काकागमनमिव तालपतनमिव काकतालम् । काकतालमिव काकतालीयम् । समासाच्च तद्विषयादिति इवार्थे छः । पा. ५. ३. १०६. मात्रा पित्रा च कृतः अभ्यासः यस्य । रूपं च यौवनं च ताभ्यां संपन्नः । किंशुकाः पलाशपुष्पाणि । सकलानि–सकलस्य वा नीतिशास्त्रस्य तत्वानि जानातीति । मारकतीं–मरकतस्य इयं मारकतीताम् । सुमनःसंगात्–सुमनसः पुष्पस्य सङ्गात् । आस्वादिततोयाः–नद्यः आस्वादिततोया उत्पन्ना भवन्ति । यद्वा समुद्रादन्यं ।

अतोऽहं षण्मासाभ्यन्तरे तव पुत्रान्नीतिशास्त्राभिज्ञान्करिष्यामि । राजा सविनयं पुनरुवाच—

कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ४५ ॥

अन्यच्च । यथोदयगिरेर्द्रव्यं संनिकर्षेण दीप्यते ।
तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ ४६ ॥

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
आस्वाद्यतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ ४७ ॥

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय भवन्तः प्रमाणम् । इत्युक्त्वा तस्य विष्णुशर्मणो बहुमानपुरःसरं पुत्रान्समर्पितवान् ।

इति प्रस्ताविका ।

---

# ॥ मित्रलाभः ॥

अथ प्रासादपृष्ठे सुखोपविष्टानां राजपुत्राणा पुरस्तात्प्रस्तावक्रमेण स पण्डितोऽब्रवीत्—

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ १ ॥

तद्भवतां विनोदाय काककूर्मादीनां विचित्रां कथां कथयामि । राजपुत्रैरुक्तम् —आर्य कथ्यताम् । विष्णुशर्मोवाच-शृणुत । संप्रति मित्रलाभः प्रस्तूयते यस्यायमाद्यः श्लोकः-

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः ।
साधयन्त्याशु कार्याणि काककूर्मसृगाखवः ॥ २ ॥

राजपुत्रा ऊचुः ।—कथमेतत् । विष्णुशर्मा कथयति—

अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः । तत्र नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति । अथ कदाचिदवसन्नायां रात्रावस्ताचलचूडावलम्बिनि भगवति कुमुदिनीनायके चंद्रमसि लघुपतनकनामा वायसः प्रबुद्धः कृतान्तमिव द्वितीयमायान्तं व्याधमपश्यत् । तमवलोक्याचिन्तयत्-अद्य प्रातरेवानिष्टदर्शनं जातम् । न जाने किमनभिमतं दर्शयिष्यति । इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः । यतः ।

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ३ ॥

---

आसादयन्त्यः आस्वाद्यतोयाः प्रभवन्ति । किंतु निर्गुणं मधुरतागुणहीनं सागरं प्राप्य अपेयाः भवन्ति । तासामपि सागरक्षारदोषदुष्टत्वात् इति भावः । बहुमानपुरःसरं—बहुमानः पुरःसरः यस्मिन्कर्मणि तद्यथ तथा । अव्य० । प्रस्तावक्रमेण—नीतिशास्त्रोपदेशस्य इति शेषः । तत्—धीमन्तः काव्यशास्त्रादिपठनेन आत्मानं विनोदयन्तः कालं यापयन्ति । भवन्तोपि धीमन्त एव इति हेतोः । मित्रलाभः—मित्राणां लाभः मित्र०स एव लक्षणया तत्संज्ञकः ग्रन्थः । कुमुदिनी०—कुमुदिन्या नायकः चन्द्रः तस्मिन् । तदनुसरणक्रमेण-व्याधानुसर-

अन्यच्च । विषयिणामिदमवश्यं कर्तव्यम् ।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ ४ ॥

अथ तेन व्याधेन तण्डुलकणान्विकीर्य जालं विस्तीर्णम् । स च प्रच्छन्नो भूत्वा स्थितः । तस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो वियति विसर्पंस्तांस्तण्डुलकणानवलोकयामास । ततः कपोतराजस्तण्डुलकणलुब्धान्कपोतान्प्रत्याह–कुतोऽत्र निर्जने वने तण्डुलकणानां संभवः । तन्निरूप्यतां तावत् । भद्रमिदं न पश्यामि । प्रायेणानेन तण्डुलकणलोभेनास्माभिरपि इथा भवितव्यम् ।

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे ।
वृद्धव्याघ्रेण संप्राप्तः पथिकः स मृतो यथा ॥ ५ ॥

कपोता ऊचुः—कथमेतत् । सोऽब्रवीत्—

## ॥ कथा १ ॥

अहमेकदा दक्षिणारण्ये चरन्नपश्यम् । एको वृद्धव्याघ्रः स्नातः कुशहस्तः सरस्तीरे ब्रूते-भो भोः पान्थाः इदं सुवर्णकङ्कणं गृह्यताम् । ततो लोभाकृष्टेन केनचित्पान्थेनालोचितम्—भाग्येनैतत्संभवति । किं त्वस्मिन्नात्मसंदेहे प्रवृत्तिर्न विधेया । यतः ।

अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा ।
यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ६ ॥

किंतु सर्वत्रार्थार्जने प्रवृत्तिः संदेह एव । तथा चोक्तम्—

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ७ ॥

तन्निरूपयामि तावत् । प्रकाशं ब्रूते-कुत्र तव कङ्कणम् । व्याघ्रो हस्तं प्रसार्य दर्शयति । पान्थोऽवदत्-कथं मारात्मके त्वयि विश्वासः । व्याघ्र उवाच-शृणु रे पान्थ प्रागेव यौवनदशायामतिदुर्वृत्त आसम् । अनेकगोमानुषाणां वधान्मे पुत्रा मृता दाराश्च । वंशहीनश्चाहम् । ततः केनचिद्धार्मिकेणाहमादिष्टः-दानधर्मादिकं चरतु भवान् । तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो न कथं विश्वासभूमिः । यत. ।

---

णक्रमेण । विषयिणां—संसारिणाम् । उत्थायोत्थायेति—प्रतिदिनं प्रबुध्य महद्भयं उपस्थितं इति बोद्धव्यं । मरणव्याधिशोकानां मध्ये अद्य किं निपतिष्यति इति न ज्ञायते इति विचिन्त्य तत्प्रतिकारचिन्तापरैः स्थातव्यमित्यर्थः । कपोतराजः—कपोतानां राजा । राजाहःसखिभ्यष्टच् इति टच् प्रत्ययः । पथिकः—पन्थानं नित्यं गच्छतीति पथिकः पान्थः वा । पाणि. ५. १. ७५. । सर्वत्रेति—अर्थार्जने प्रवृत्तेन नरेण आत्मा सर्वत्र संदेहे पात्यते एव । नेति—संशयं अनारुह्य नरः भद्राणि न पश्यति । पुनः संशयं आरुह्य यदि जीवति तर्हि भद्रं पश्यति एव । साहसे श्रीः प्रतिवसति इति भावः । म. भा. आ. प. अ. १४०. श्लो. ७३. मारात्मके—मारयतीति मारः तादृशः आत्मा स्वभावः यस्य । हिंसके इत्यर्थः । आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । इति अमरः । धार्मिकेण—धर्मं अधीत्य चरतीति वा धार्मिकः । गलित०—न खं अस्य इति नखः । नखाश्च दन्ताश्च नखदन्तं ( स० द्वं० )

इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोयं धर्मस्याष्टविधः स्मृतः ॥ ८ ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ९ ॥

मम चैतावाँल्लोभाविरहो येन स्वहस्तस्थमपि सुवर्णकङ्कणं यस्मैकस्मैचिद्दातुमिच्छामि। तथापि व्याघ्रो मानुषं खादतीति लोकापवादो दुर्निवारः। यतः।

गतानुगतिको लोकः कुट्टनीमुपदेशिनीम्।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ १० ॥

मया च धर्मशास्त्राण्यधीतानि। शृणु—

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा।
दरिद्रे दीयते दान सफलं पाण्डुनन्दन ॥ ११ ॥
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ १२ ॥

अपरं च। प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये।
आत्मौपम्यैन पुरुषः प्रमाणमधिगच्छाति ॥ १३ ॥

अन्यच्च। मातृवत्परदारेषु परद्रव्येषु लोष्टवत्।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ १४ ॥

त्वं चातीव दुर्गतस्तेन तत्तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्—

दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ १५ ॥

अन्यच्च। दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्विकं विदुः ॥ १६ ॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण॥ ततो यावदसौ तद्वचः प्रतीतो लोभात्सरः स्नातुं प्रविशति तावन्महापङ्के निमग्नः पलायितुमक्षमः। पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत्—अहह महापङ्के पतितोऽसि। अतस्त्वामहमुत्थापयामि। इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्—

न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः॥
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः ॥ १७॥

किं च। अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ १८॥

---

गलितं नखदन्तं यस्य। विश्वास०—वि० पात्रम्। इज्याध्ययन०—तिष्ठति—म. भा. उद्यो. अ. ३२, ५६–५७. इज्या यज्ञः। अध्ययनं—स्वाध्यायाभ्यासः। गतानुगतिकः—गतं अनु गतिः यस्य। कुट्टनी—परनारीं पुंसा योजयित्री स्त्री। मातृवत्—मात्रा तुल्यं मातृवत्। व्याधितस्य— व्याधिः अस्य संजातः तस्य। निर्गता रुजा यस्यासौ नीरुजः तस्यौषधैः किं न किमपि प्रयोजनमित्यर्थः। श्लो. १६–भगवद्गीता अ. १७.२०. कश्चिद्दुरात्मा धर्मशास्त्रं पठति वेदाध्ययनं च करोतीति दुरात्मनः तस्य विश्वासदाने कारणं न तस्मिन्न विश्वस्यादित्यर्थः। हस्तिस्नान०—यथा हस्ती स्नात्वा तदनुपदमेव स्वाङ्गं धूल्या मलिनयति तद्वदवशेन्द्रियचित्तानां क्रिया विक्रियानुगतैव न किंचित्कार्यसाधिका इत्यर्थः। दुर्भगा०—दुःशीला-

तन्मया भद्रं न कृतं यदत्र मारात्मके विश्वासः कृतः । तथा ह्युक्तम्—

नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ १९ ॥

अपरं च । सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ २० ॥

अन्यच्च । स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद्ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ २१ ॥

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च । अतोहं ब्रवीमि—कंकणस्य तु लोभेन इत्यादि । अतः सर्वथाऽविचारितं कर्म न कर्तव्यम् । यतः ।

सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं
सुदीर्घकालेपि न याति विक्रियाम् ॥ २२ ॥

तद्वचनं श्रुत्वा कश्चित्कपोतः सदर्पमाह—आः किमेवमुच्यते ।

वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारेण भोजनेप्यप्रवर्तनम् ॥ २३ ॥

यतः । शंकाभिः सर्वमाक्रान्तमन्नं पानं च भूतले ।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ २४ ॥

ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशंकितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ॥ २५ ॥

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः । यतः ।

सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ २६ ॥

अन्यच्च । लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २७ ॥

अन्यच्च । असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिना भवन्ति ॥२८॥

---

पोषणवत् । दुर्भगायाः आभरणवत् इति वा । गगनविहारी—गगने विहर्तुं शलिमस्य । एवमन्यत्रापि ताच्छील्ये णिनिः । ईर्ष्यी—परोत्कर्षासहिष्णुः । घृणी—जुगुप्सनशीलः । घृणा तु स्याज्जुगुप्सायां करुणायाम् । इति हैमः । जुगुप्सा करुणे घृणे इत्यमरः । म. भा. उ. अ. ३३;९०. धारयन्तः—सम्यग्जानन्तः । समापन्ना उपस्थिता विपत्तिः तस्याः कालः तस्मिन् ।

---

१. असंभवो हेममयस्य जन्तोस्तथापि रामो लुलुभे मृगाय । प्रायः समासन्नपराभवाणां धियो विपर्यस्ततरा भवन्ति ॥ इति महाभारतीयः श्लोकः । सभा प, ७६. ५ ।

अतःपरं—तथा चोक्तम्—आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ इत्यधिकमेकस्मिन् पुस्तके ।

अनन्तरं सर्वे जालेन बद्धा बभूवुः । ततो यस्य वचनात्तत्रावलम्बितास्तं सर्वे तिरस्कुर्वन्ति । यतः ।

न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ २९ ॥

तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच—नायमस्य दोषः । यतः ।

आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥ ३० ॥

अन्यच्च । स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः ।
न तु दुर्विहितातीतवस्तूपालम्भपण्डितः ॥ ३१ ॥

विपत्काले विस्मय एव कापुरुषलक्षणम् । तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् । यतः ।

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ३२ ॥

संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ३३ ॥

अन्यच्च । षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ३४ ॥

इदानीमप्येवं क्रियताम् । सर्वैरेकचित्तीभूय जालमादायोड्डीयताम् । यतः ।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ ३५ ॥

संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ३६ ॥

इति विचिन्त्य पक्षिणः सर्वे जालमादायोत्पतिताः । अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत्—

संहतास्तु हरन्ती मे जालं मम विहंगमाः ।
यदा तु विवदिष्यन्ते वशमेष्यन्ति मे तदा ॥ ३७ ॥

---

कार्यविपत्तिः—कार्यनाशः । मुखरः ( मुखं रातीति ) अग्रगः । स्तम्भीभवति न स्तम्भः अस्तम्भः । अस्तभः स्तम्भः सम्पद्यते स्तम्भीभवति । दुर्विहितेति—दुर्विहितमसाधुकृतमतीतं वा कालेऽकृतोपायं यद्वस्तु तस्योपालम्भे । भीतपरित्राणेति पाठे भीतानां परित्राणं तदेव वस्तु तस्य उपालम्भे । पंडितः एवं भीतानां परित्राणं कर्तव्यं एवं न कर्तव्यमिति वाक्पाण्डित्ये एव कुशलः इत्यर्थः । यद्वा उपालम्भः कालयापनं तत्र पण्डितः । विस्मयः—किंकर्तव्यतामूढता इति यावत् । प्रतीकारः—उपायचिन्तनेन आपदः निराकरणम् । उपसर्गस्य घञ्यमनुष्ये बहुलं इति दीर्घः । तन्द्रा विगलितगात्रता । दीर्घसूत्रता—दीर्घं सूत्रं व्यवस्था यस्य तस्य भावः दीर्घसूत्रता चिरक्रियता । 'दीर्घसूत्री विनश्यति ' । इ० पं. तन्त्रे ( च. तं. ) एकचित्तीभूय—न एकं चित्तं येषां ते अनेकचित्ताः ते एकचित्ताः भूत्वा । विवदिष्यन्ते

---

१. न तु भीतपरित्राण० इति । न त्वतीतपरित्राण० इ० च पा० ।

ततस्तेषु चक्षुर्विषयातिक्रान्तेषु पक्षिषु स व्याधो निवृत्तः । अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः—किमिदानीं कर्तुमुचितम् । चित्रग्रीव उवाच—

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् ।
कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ३८ ॥

तदस्माकं मित्रं हिरण्यको नाम मूषकराजो गण्डकीतीरे चित्रवने निवसति । सोऽस्माकं पाशांश्छेत्स्यति । इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः । हिरण्यकश्च सर्वदापायशङ्कया शतद्वारं विवरं कृत्वा निवसति । ततो हिरण्यकः कपोतावपातभयाच्चकितस्तूष्णीं स्थितः । चित्रग्रीव उवाच—सखे हिरण्यक किमस्मान्न संभाषसे । ततो हिरण्यकस्तद्वचनं प्रत्यभिज्ञाय ससंभ्रमं बहिर्निःसृत्याब्रवीत्—आः पुण्यवानस्मि । प्रियसुहृन्मे चित्रग्रीवः समायातः ।

यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ॥ ३९ ॥

पाशबद्धांश्चैतान्दृष्ट्वा सविस्मयः क्षणं स्थित्वोवाच—सखे किमेतत । चित्रग्रीवोऽवदत्— सखे अस्माकं प्राक्तनजन्मकर्मणः फलमेतत् ।

यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ ४० ॥

रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ४१ ॥

एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति । चित्रग्रीव उवाच— मित्र मा मैवम् । अस्मदाश्रितानामेषां तावत्पाशांश्छिन्धि तदा मम पाशं पश्चाच्छेत्स्यसि । हिरण्यकोऽप्याह—अहमल्पशक्तिः । दन्ताश्च मे कोमलाः । तदेतेषां पाशांश्छेत्तुं कथं समर्थः । तद्यावन्मे दन्ता न त्रुट्यन्ति तावत्तव पाशं छिनद्मि । तदनन्तरमेषामपि बन्धनं यावच्छक्यं छेत्स्यामि । चित्रग्रीव उवाच—अस्त्वेवम् । तथापि यथाशक्त्येतेषां बन्धनं खण्डय । हिरण्यकेनोक्तम्—आत्मपरित्यागेन यदाश्रितानां परिरक्षणं तन्न नीतिविदां संमतम् । यतः ।

आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ४२ ॥

---

कलहं करिष्यन्ति । निपतिष्यन्ति इति पाठान्तरम् । चक्षुर्विषया०—चक्षुषोर्विषयः तं अतिक्रान्तेषु दृष्टिपथमतीत्य गतेषु । कार्यकारणतः कारणे सत्येव कार्यमिति नियमात् कपोत०—कपोतानां अवपातः अवरोहः तस्मात् भयं तस्मात । प्रत्यभिज्ञाय—स एव मम परिचितः अयं शब्द इति ज्ञात्वा । ससंभ्रमं सत्वरं सम्मानपूर्वकं च। 'गृहमुपगते संभ्रमविधिः' इति भर्तृहरिः। संभाषा—आलापमात्रम् । संलापः—अन्योन्यं प्रति भाषणं विश्रम्भालापः इत्यर्थः । 'संलापो भाषणं मिथः' इत्यमरः । प्राक्तन०—प्राक् भवं प्राक्तनं, प्राक्तनं च तत् जन्म तस्मिन् कर्म तस्य । परीतापः—सर्वतः संतापः पीडा । उपसर्गस्य घञ्यमनुष्ये बहुलं इति उपसर्गे अकारस्य दीर्घः । अस्मदा०—मां आश्रिताः अस्मदाश्रिताः तेषाम् । तावत्—प्रथमम् । आत्मपरित्यागेन स्वप्राणान् संशये निक्षिप्येत्यर्थः । आपदर्थमिति—आपदर्थमापत्प्रतीकारार्थम् । रक्षेत् संगृह्णीयात् । दारान्स्वभार्याम् । म. स्मृ. ७. २१३; म. भा. उ. प. ३७. १८.



---

१ प्राक्तनजन्मदुःकृतमिदं विचेष्टितम् । ड. पा.

अन्यच्च । धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः ।
तान्निघ्नता किं न हतं रक्षता किं न रक्षितम् ॥ ४३ ॥

चित्रग्रीव उवाच—सखे नीतिस्तावदीदृश्येव । किं त्वहमस्मदाश्रितानां दुःखं सोढुं सर्वथाऽसमर्थः । तेनेदं ब्रवीमि । यतः ।

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ ४४ ॥

अयमपरश्चासाधारणो हेतुः ।

जातिद्रव्यगुणानां च साम्यमेषां मया सह ।
मत्प्रभुत्वफलं ब्रूहि कदा किं तद्भविष्यति ॥ ४५ ॥

अन्यच्च । विना वर्तनमेवैते न त्यजन्ति ममान्तिकम् ।
तन्मे प्राणव्ययेनापि जीवयैतान्ममाश्रितान् ॥ ४६ ॥

किं च । मांसमूत्रपुरिषास्थिनिर्मितेऽस्मिन्कलेवरे ।
विनश्वरे विहायास्थां यशः पालय मित्र मे ॥ ४७ ॥

अपरं च । पश्य ।

यदि नित्यमनित्येन निर्मलं मलवाहिना ।
यशः कायेन लभ्येत तन्न लब्धं भवेन्नु किम् ॥ ४८ ॥

यतः । शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ४९ ॥

इत्याकर्ण्य हिरण्यकः प्रहृष्टमनाः पुलकितः सन्नब्रवीत्-साधु मित्र साधु । अननाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते । एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि । ततो हिरण्यकः सर्वान्सादरं संपूज्याह—सखे चित्रग्रीव सर्वथात्र जालबन्धनविधौ दोषमाशङ्क्यात्मन्यवज्ञा न कर्तव्या । यतः ।

योऽधिकाद्योजनशतात्पश्यतीहामिषं खगः ।
स एव प्राप्तकालस्तु पाशबन्धं न पश्यति ॥ ५० ॥

अपरं च ।

शशिदिवाकरयोर्ग्रहपीडनं गजभुजंगमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥५१॥

अन्यच्च ।

व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ।
दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ५२ ॥

---

किं न हतं सर्वमेव हतं विनाशितमिति यावत् । सर्वथा—सर्वप्रकारेण । प्रकारवचने थाल इति थाल्प्रत्ययः । सत् च तत् निमित्तं च तस्मिन् । नियते ध्रुवं भाविनि । वर्तनं जीवनोपायम् । वेत न मित्यर्थः । कलेवरे शरीरे । विनश्वरे इति—यशःशरीरे भव मे दयालुः इति अनुरूपभावः रघुवंशे । २. ५७. पुलकितः-पुलका अस्य संजाताः स पुलकितः रोमाञ्चितः । आश्रितेषु वात्सल्येन स्नेहेन । आत्मन्यवज्ञेति आत्मानं मा तिरस्कुरु । मतिमतां प्रशस्तबुद्धिशालिनाम् । व्योमैकान्त०-एकः अन्तः एकान्तः व्योम्नः एकान्तस्तस्मिन् विहर्तुं शीलमेषामाकाशैकदेशसंचारिणामित्यर्थः । अगाधमतलस्पर्शि सलिलमुदकं यस्य तस्मात् । दुर्नीतं—दुर्नयः । स्थानलाभे—अनुकूलस्थानप्राप्तौ । व्यसन०—व्यसनमेव प्रसारितः करः येन ।

इति प्रबोध्यातिथ्यं कृत्वालिङ्ग्य च चित्रग्रीवस्तेन संप्रेषितो यथेष्टदेशान्सपरिवारो ययौ । हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

यानि कानि च मित्राणि कर्तव्यानि शतानि च ।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः ॥ ५३ ॥

अथ लघुपतनकनामा काकः सर्ववृत्तान्तदर्शी साश्चर्यमिदमाह—अहो हिरण्यक श्लाघ्योऽसि । अतोऽहमपि त्वया सह मैत्रीमिच्छामि । अतो मां मैत्र्येणानुग्रहीतुमर्हसि । एतच्छ्रुत्वा हिरण्यकोऽपि विवराभ्यन्तरादाह—कस्त्वम् । स ब्रूते—लघुपतनकनामा वायसोऽहम् । हिरण्यको विहस्याह—का त्वया सह मैत्री । यतः ।

यद्येन युज्यते लोके बुधस्तत्तेन योजयेत् ।
अहमन्नं भवान्भोक्ता कथं प्रीतिर्भविष्यति ॥ ५४ ॥

अपरं च । भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।
शृगालात्पाशबद्धोऽसौ मृगः काकेन रक्षितः ॥ ५५ ॥

वायसोऽब्रवीत्—कथमेतत् । हिरण्यकः कथयति—

## ॥ कथा २ ॥

अस्ति मगधदेशे चम्पकवती नामारण्यानी । तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः । स च मृगः स्वेच्छया भ्राम्यन्हृष्टपुष्टाङ्गः केनचिच्छृगालेनावलोकितः । तं दृष्ट्वा शृगालोऽचिन्तयत्-आः कथमेतन्मांसं सुललितं भक्षयामि । भवतु । विश्वासं तावदुत्पादयामि । इत्यालोच्योपसृत्याब्रवीत्-मित्र कुशलं ते । मृगेणोक्तम्—कस्त्वम् । स ब्रूते क्षुद्रबुद्धिनामा जम्बुकोऽहम् । अत्रारण्ये बन्धुहीनो मृतवन्निवसामि । इदानीं त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि । अधुना तवानुचरेण मया सर्वथा भवितव्यम् । मृगेणोक्तम्-एवमस्तु । ततः पश्चादस्तंगते सवितरि भगवति मरीचिमालिनि तौ मृगस्य वासभूमिं गतौ । तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काकोऽवदत्—सखे चित्राङ्ग कोऽयं द्वितीयः । मृगो ब्रूते-जम्बुकोऽयम् । अस्मत्सख्यमिच्छन्नागतः । काको ब्रूते— मित्र अकस्मादागन्तुना सह मैत्री न युक्ता । तथा चोक्तम्—

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥ ५६ ॥

तावाहतुः—कथमेतत् । काकः कथयति—

## ॥ कथा ३ ॥

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकाद्गलितनखनयनो जरद्गवनामा गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किंचित्किंचिदुद्धृत्य ददति । तेनासौ जीवति ।

---

गृह्णात्यात्मवशं नयति । विपत्तेर्मृत्योः । अरण्यानी—महारण्यम् । मृतवत्—मृतेन तुल्यम् । अस्तं गते अस्तम् इति मान्तमव्ययम् । गते प्राप्ते । मरीचिमालिनि—मरीचयः रश्मयः तेषां माला समूहः सा अस्यास्तीति मरीचिमाली सूर्यः तस्मिन् । चिरमित्रं—चिरकालात्प्रभृति जातं मित्रम् । कुलं च शीलं च कुलशीलम् । अज्ञातं कुलशीलं यस्य । दैवदुर्विपाकात्—दुष्टः विपाकः दुर्विपाकः दैवस्य दुर्विपाकस्तस्मात् । गलित०—नखा नयने च नखनयने गलिते नखनयने यस्य । पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः । इत्यमरः

शावकानां रक्षणं करोति । अथ कदाचिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान्भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तम्—कोऽयमायाति । दीर्घकर्णो गृध्रमवलोक्य सभयमाह–हा हतोऽस्मि । यतः ।

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं वक्षिय नरः कुर्याद्यथोचितम् ॥ ५७ ॥

अधुनास्य संनिधाने पलायितुमक्षमः । तद्यथा भवितव्यं तद्भवतु । तावद्विश्वासमुत्पाद्यास्य समीपमुपगच्छामि । इत्यालोच्योपसृत्याब्रवीत्—आर्य त्वामभिवन्दे । गृध्रोऽवदत्—कस्त्वम् । सोऽवदत्—मार्जारोऽहम् । गृध्रो ब्रूते—दूरमपसर । नो चेद्धन्तव्योऽसि मया । मार्जारोऽवदत्—श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । यतः ।

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ ५८ ॥

गृध्रो ब्रूते—ब्रूहि किमर्थमागतोऽसि । सोऽवदत्—अहमत्र गङ्गातीरे नित्यस्नायी ब्रह्मचारी चान्द्रायणव्रतमाचरंस्तिष्ठामि । यूयं धर्मज्ञानरता इति विश्वासभूमयः पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः। भवन्तश्चैतादृशा धर्मज्ञा यन्मामातिथिं हन्तुमुद्यताः। गृहस्थधर्मश्चैषः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ॥ ५९ ॥

यदि वा धनं नास्ति तदा प्रीतिवचसाप्यतिथिः पूज्य एव । यतः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ६० ॥

अपरं च । निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चंद्रश्चाण्डालवेश्मनः ॥ ६१ ॥

अन्यच्च । गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥ ६२ ॥

---

भयार्तैः–भयपीडितैः । कोलाहलः–कलकलः । नित्यस्नायी—नित्यं स्नातुं शीलमस्य । चान्द्रायणव्रतम्—चन्द्रस्य अयनं इव अयनं यस्मिन् । एतल्लक्षणमुक्तं वसिष्ठेन—मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी स्यात्पक्षशेषं समापयेत् ॥ एवं हि शुक्लपक्षादौ ग्रासमेकं तु भक्षयेत् । ग्रासोपचयभोजी स्यात्पक्षशेषं समापयेत् ॥ अत्रैव गायत्सामानि अपि वा व्याहृतीर्जपेत् । एष चान्द्रायणो मासः पवित्रमृषिसंस्तुतः ॥ अनादिष्टेषु सर्वेषु प्रायश्चित्तं विधीयते ॥ एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । अमावास्यां न भुञ्जीत एवं चान्द्रायणो विधिः ॥ एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ इति मनुश्च ( ११. २१६. ) । विश्वासभूमयः—विश्वासभाजनानि श्रद्धेयवचसः इत्यर्थः । अतिथये इदम् आतिथ्यमतिथिसत्कारादिकम् । तृणानि तृणनिर्मितमासनादि । सूनृता—सत्या प्रिया च । सूनृतं प्रिये । सत्ये इत्यमरः ।

---



१ छेत्तुमप्यागताच्छायां इ० पा० । २ वेश्मनि इ० पा० ।

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ६३ ॥

अन्यच्च । उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः ॥ ६४ ॥

गृध्रोऽवदत्—मार्जारो हि मांसरुचिः । पक्षिशावकाश्चात्र निवसन्ति । तेनाहमेवं ब्रवीमि । तच्छ्रुत्वा मार्जारो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । ब्रूते च—मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसितम् । परस्परं विवदमानानामपि धर्मशास्त्राणाम् 'अहिंसा परमो धर्मः' इत्यत्रैकमत्यम् । यतः ।

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ६५ ॥

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ६६ ॥

अन्यच्च । योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ ६७ ॥

अपि च । मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते ।
शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ६८ ॥

शृणु पुनः । स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥ ६९ ॥

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः ।

ततो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति । येषामपत्यानि खादितानि तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा । तत्परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः । पश्चात्पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि । अनन्तरमनेनैव जरद्गवेनास्माकं शावकाः खादिता इति सर्वैः पक्षिभिर्निश्चित्य गृध्रो व्यापादितः । अतोऽहं ब्रवीमि अज्ञातकुलशीलस्य इत्यादि ॥ इत्याकर्ण्य स जम्बुकः सकोपमाह—मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एव । तत्कथं भवता सहैतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ।

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ ७० ॥

---

नोच्छिद्यन्ते सदैव संनिहितानीत्यर्थः । गुरुः पूज्यः । भग्ना आशा यस्य । सर्वदेवमयः—सर्वेषां देवानां विकारः । वीतः गतः रागः विषयासक्तिः यस्य । विवदमानानां परस्परविरुद्धार्थप्रतिपादकानामित्यर्थः । एकं मतं येषां तान्येकमतानि तेषां भावः ऐकमत्यम् । सर्वा वाक्कायमनःकृता त्रिप्रकारेत्यर्थः या हिंसा सर्वेषां वा हिंसा तस्याः । धर्मः एव एकः सुहृदः निधनेप्यनुयाति । प्रपूर्यते उदरमिति शेषः । दग्धं तुच्छमुदरं तस्य । शोकेन आर्तैः शोकार्तैः । पीडितैः जिज्ञासा ज्ञातुमिच्छा अन्वेषणा । निरूपयद्भिः—निपुणमालोकयद्भिः । निरस्ताः पादपा वृक्षा यस्मात्तस्मिन् । द्रुमायते—द्रुमवदाचरति द्रुमस्थाने भवतीत्यर्थः ।

---

१ शूकरेणानुमानेन परेण परिवर्णितुम् । इति पा०

अन्यच्च । अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ७१ ॥

यथायं मृगो मम बन्धुस्तथा भवानपि । मृगोऽब्रवीत्—किमनेनोत्तरोत्तरेण । सर्वैरेकत्र विश्रम्भालापैः सुखिभिः स्थीयताम् । यतः ।

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥ ७२ ॥

काकेनोक्तम्—एवमस्तु । अथ प्रातः सर्वे यथाभिमतदेशं गताः । एकदा निभृतं शृगालो ब्रूते-सखे अस्मिन्वनैकदेशे सस्यपूर्णक्षेत्रमस्ति । तदहं त्वां नीत्वा दर्शयामि । तथा कृते सति स मृगः प्रत्यहं तत्र गत्वा सस्यं खादति । अथ क्षेत्रपतिना तद् दृष्ट्वा पाशो नियोजितः । अनन्तरं पुनरागतो मृगः पाशैर्बद्धोऽचिन्तयत्—को मामितः कालपाशादिव व्याधपाशात्त्रातुं मित्रादन्यः समर्थः । तत्रान्तरे जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत्—फलिता तावदस्माकं कपटप्रबन्धेन मनोरथसिद्धिः । एतस्योत्कृत्यमानस्य मांसासृग्लिप्तान्यस्थीनि मयावश्यं प्राप्तव्यानि । तानि बाहुल्येन भोजनानि भविष्यन्ति । मृगस्तं दृष्ट्वोल्लसितो ब्रूते—सखे छिन्धि तावन्मम बन्धनम् । सत्वरं त्रायस्व माम् । यतः ।

आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ७३ ॥

अपरं च । उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ७४ ॥

जम्बुको मुहुर्मुहुः पाशं विलोक्याचिन्तयत्--दृढस्तावदयं बन्धः । ब्रूते च—सखे स्नायुनिर्मिता एते पाशाः तदद्य भट्टारकवारे कथमेतान्दन्तैः स्पृशामि । मित्र यदि चित्ते नान्यथा मन्यसे तदा प्रभाते यत्त्वया वक्तव्यं तत्कर्तव्यम् । इत्युक्त्वा तत्समीप आत्मानमाच्छाद्य स्थितः । अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्येतस्ततोऽन्विष्य तथाविधं दृष्ट्वोवाच—सखे किमेतत् । मृगेणोक्तम्—अवधीरितसुहृद्वाक्यस्य फलमेतत् । तथा चोक्तम्—

सुहृदां हितकामानां यः शृणोति न भाषितम् ।
विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ ७५ ॥

काको ब्रूते—स वञ्चकः क्वास्ते । मृगेणोक्तम्—मन्मांसार्थी तिष्ठत्यत्रैव । काको ब्रूते—उक्तमेव मया पूर्वम् ।

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ७६ ॥
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ७७ ॥

---

उत्तरोत्तरेण वाक्कलहेन । निभृतं—रहसि । उपस्थितः—निकटस्थः । कपटप्रबन्धेन—कपटयुक्तिरचनेन । उल्लसितः—उल्लासं प्राप्तः हर्षितः । शुचिम्—अकुटिलव्यवहारं, सत्यवादिनं वा । राष्ट्रविप्लवे—राष्ट्रस्य विप्लवे विनाशे राष्ट्रोच्छेदे । तिष्ठति—उक्तास्ववस्थासु समवृत्तिरेव साहाय्यकरणे दक्षः तिष्ठति । भट्टारकवारे—रविवासरे । अन्यथा मन्यसे—विकल्पं न गृह्णासि । तथा विधा दशा यस्य तम् । अवधीरित०—अवधीरितं तिरस्कृतं सुहृदः वाक्यमुपदेशः इति यावत् तस्य । नृशंसेभ्यः—घातुकेभ्यः क्रूरेभ्यः । दीप०—दीपस्य निर्वाणं ज्योतिर्लोपः

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ७८ ॥

ततः काको दीर्घं निःश्वस्य अरे वञ्चक किं त्वया पापकर्मणा कृतम् । यतः ।

संलापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् ।
आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ ७९ ॥
उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥ ८० ॥
दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ८१ ॥

अथवा स्थितिरियं दुर्जनानाम् ।

प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥ ८२ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ८३ ॥

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन्काकेनावलोकितः । तमालोक्य काकेनोक्तम्—सखे मृग त्वमात्मानं मृतवत्संदर्श्य वातेनोदरं पूरयित्वा पादान्स्तब्धीकृत्य तिष्ठ । यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरं पलायिष्यसे । मृगस्तथैव काकवचनेन स्थितः । ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः । आः स्वयं मृतोऽसि इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान्ग्रहीतुं सयत्नो बभूव । ततः काकशब्दं श्रुत्वा मृगः सत्वरमुत्थाय पलायितः । तमुद्दिश्य तेन क्षेत्रपतिना क्षिप्तेन लगुडेन शृगालो हतः । तथा चोक्तम्—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ॥ ८४ ॥

अतोऽहं ब्रवीमि—भक्ष्यभक्षकयोः प्रीतिः इत्यादि ॥ काकः पुनराह—

भक्षितेनापि भवता नाहारो मम पुष्कलः ।
त्वयि जीवति जीवामि चित्रग्रीव इवानघ ॥ ८५ ॥

अन्यच्च । तिरश्चामपि विश्वासो दृष्टः पुण्यैककर्मणाम् ।
सतां हि साधुशीलत्वात्स्वभावो न निवर्तते ॥ ८६ ॥

किं च । साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् ।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ ८७ ॥

---

तस्य गन्धः । अरुन्धती—तन्नाम्नी अल्पा तारका । मिथ्योपचारैः—अन्यथोपासनया कपटव्यवहारेण । किमर्थिनां०—तेषां वञ्चने का श्लाघा गुणो वा तान् वञ्चयित्वा को लाभ इति वा । विश्रब्धे—विश्वस्ते । असत्यसन्धं—असत्या संधा प्रतिज्ञा यस्य तम् । स्थितिः—स्वभावः वर्तनक्रमो वा ॥ खादति पृष्ठमांसं—खलपक्षे परोक्षे अधिक्षिपति । छिद्रं—रन्ध्रम् । लगुडः—यष्टिः । अत्युत्कटैः—अतिभूमिं गतैः, अतिवृद्धैरित्यर्थः । पापपुण्यैः हेतुना अश्नुते नर इति शेषः । त्वयि जीवतीति—त्वं जीवसि चेन्मम साहाय्यं करिष्यसि । एवं मज्जीवनं द्रापदि त्वज्जीवितनिबन्धनमित्यर्थः । तिरश्चां पशुपक्षिणाम् । पुण्यैक०—पुण्यं एकं मुख्यं कर्म येषाम् । तृणोल्कया—निर्गतज्वालेन तृणकाण्डेन । शत्रूणां पक्षोस्यास्तीति ।

हिरण्यको ब्रूते—चपलस्त्वम् । चपलेन सह स्नेहः सर्वथा न कर्तव्यः । तथा चोक्तम् ।

मार्जारो महिषो मेषः काकः कापुरुषस्तथा ।
विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नोचितः ॥ ८८ ॥

किं चान्यत् । शत्रुपक्षो भवानस्माकम् । उक्तं चैतत् ।

शत्रुणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
तप्तमपि पानीयं शमयत्येव पावकम् ॥ ८९ ॥
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ९० ॥
यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ९१ ॥

अपरं च । महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्यासु च विरक्तासु तदन्तं तस्य जीवनम् ॥ ९२ ॥

लघुपतनको ब्रूते—श्रुतं मया सर्वम् । तथापि मम चैतावान्संकल्पस्त्वया सह सौहृद्यमवश्यं करणीयमिति । नो चेदनाहारेणात्मानं व्यापादयिष्यामि । तथा हि ।

मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥ ९३ ॥

किं च । द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ९४ ॥

किं च । नारिकेलसमाकारा दृश्यन्ते हि सुहृज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ ९५ ॥
स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् ।
भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः ॥ ९६ ॥

अन्यच्च । शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ९७ ॥

एतैर्गुणैरुपेतो भवदन्यो मया कः सुहृत्प्राप्तव्यः । इत्यादि तद्वचनमाकर्ण्य हिरण्यको बहिर्निःसृत्याह आप्यायितोऽहं भवतानेन वचनामृतेन । तथा चोक्तम् ।

**घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्तावली**
**न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् ।**
**प्रीत्या सज्जनभाषितं प्रभवति प्रायो यथा चेतसः**
**सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ ९८ ॥**

---

सुश्लिष्टेन—सुघटितेन । महताप्यर्थसारेण—हेतौ तृतीया । शत्रोः महानर्थलाभः भूतः इति मया वा शत्रुर्महता धनव्ययेन वशीकृतः इति हेतोः । तदन्तं तद् विश्वासकरणमेवान्तोऽवधिर्यस्य । अनाहारेण—उपवासेन प्रायोपवेशनेनेति यावत् । दुःसंधानः—संधानं पुनर्मेलनं मैत्री च । अनुबध्नन्ति—आसक्ताः तिष्ठन्ति । त्यागिता—त्यागः अस्यास्तीति त्यागी तस्य भावः । सामान्यं—समव्यवहारः । दाक्षिण्यं—सरलता अनुकूलाचरणं वा । आप्यायितः—तर्पितः वृद्धिं प्रापितः । घर्मार्तम्—घर्मेण निदाघेन आर्तं पीडितं जनं सुशीतलजलैः स्नानं न तथा सुखयति, मुक्तावली मुक्ताहारो न सुखयति इत्यन्वयः । अङ्गे अङ्गे इति प्रत्यङ्गम् । प्रीत्या इ०—सद्युक्त्या पुरस्कृतं सनाथं आकृष्टिमन्त्रोपमं आकृष्टिमन्त्रः वशीकरणमन्त्रः तेन उपमा यस्य । अतिमनोहारि । प्रीत्या—प्रीतिपूर्वकमुक्तं सज्जनभाषितं यथा

अन्यच्च । रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता ।
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ ९९ ॥

अनेन वचनक्रमेण तदेकदूषणमपि त्वयि न लक्ष्यते । यतः ।

पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते ।
अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥ १०० ॥

अपरं च । अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः ।
प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥ १०१ ॥
मनस्यन्यद्वचस्यन्यत्कार्यमन्यद् दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ १०२ ॥

तद्भवतु भवतोऽभिमतमेव । इत्युक्त्वा हिरण्यको मैत्र्यं विधाय भोजनविशेषैर्वायसं संतोष्य विवरं प्रविष्टः । वायसोऽपि स्वस्थानं गतः । ततः प्रभृति तयोरन्योन्याहार-प्रदानेन कुशलप्रश्नैर्विश्रम्भालापैश्च कालोऽतिवर्तते ।

एकदा लघुपतनको हिरण्यकमाह—सखे कष्टतरलभ्याहारमिदं स्थानं तत्परित्यज्य स्थानान्तरं गन्तुमिच्छामि । हिरण्यको ब्रूते—मित्र क्व गन्तव्यम् । तथा चोक्तम् ।

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
माऽसमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ १०३ ॥

वायसो ब्रूते—अस्ति सुनिरूपितं स्थानम् । हिरण्यकोऽवदत्—किं तत् । वायसो ब्रूते-अस्ति दण्डकारण्ये कर्पूरगौराभिधानं सरः । तत्र चिरकालोपार्जितः प्रियसुहृन्मे मन्थराभिधानः कच्छपो धार्मिकः प्रतिवसति । यतः ।

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् ।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥ १०४ ॥

स च भोजनविशेषैर्मां संवर्धयिष्यति । हिरण्यकोऽप्याह—तत्किमत्रावस्थाय मया कर्तव्यम् । यतः ।

यस्मिन्देशे न संमानो न वृत्तिर्न च बान्धवः ।
न च विद्यागमः कश्चित्तं देशं परिवर्जयेत् ॥ १०५ ॥

अपरं च । लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ १०६ ॥
तत्र मित्र न वस्तव्यं यत्र नास्ति चतुष्टयम् ।
ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥ १०७ ॥

ततो मामपि तत्र नय । अथ वायसस्तत्र तेन मित्रेण सह विचित्रकथालापैः सुखेन तस्य सरसः समीपं ययौ । ततो मन्थरो दूरादवलोक्य लघुपतनकस्य यथोचितमा-तिथ्यं विधाय मूषिकस्यातिथिसत्कारं चकार । यतः ।

बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वत्राभ्यागतो गुरुः ॥ १०८ ॥

---

सुकृतिनां न तु दुर्जनानाम् । तेषां एव गुणग्रहणसामर्थ्यात् । चेतसः प्रभवति चेतसि मुदं जनयितुं शक्नोति तथा इत्या० । अचापल्यं समीक्ष्यकारिता । सौहार्द—शोभनं हृदयं यस्य असौ सुहृत् तस्य भावः । शाठ्येनोपहतमाक्रान्तं चेतो यस्य । चलतीति—सर्वथा विचार्य कर्मणि प्रवर्तते । परं स्थानमसमीक्ष्य सम्यगनिरूप्येत्यन्वयः । कच्छपः कूर्मः । वृत्तिर्जीवि-कासाधनमिति यावत् । श्रोत्रियः—छंदः अधीते वेत्ति वा श्रोत्रियः अधीतवेदः ब्राह्मणः । तदुक्तम् ' जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः

वायसोऽवदत्–सखे मन्थर सविशेषपूजामस्मै विधेहि । यतोऽयं पुण्यकर्मणां धुरीणः कारुण्यरत्नाकरो हिरण्यकनामा मूषिकराजः । एतस्य गुणस्तुतिं जिह्वासहस्रद्वयेनापि सर्पराजो न कदाचित् कथयितुं समर्थः स्यात् । इत्युक्त्वा चित्रग्रीवोपाख्यानं वर्णितवान् । मन्थरः सादरं हिरण्यकं संपूज्याह–भद्र आत्मनो निर्जनवनागमनकारणमाख्या-तुमर्हसि । हिरण्यकोऽवदत्—कथयामि । श्रूयताम् ।

॥ कथा ४ ॥

अस्ति चम्पकाभिधानायां नगर्यां परिव्राजकावसथः । तत्र चूडाकर्णो नाम परिव्राड् प्रतिवसति । स च भोजनावशिष्टभिक्षान्नसहितं भिक्षापात्रं नागदन्तकेऽवस्थाप्य स्वपिति । अहं च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि । अनन्तरं तस्य प्रियसुहृद्वीणाकर्णो नाम परि-व्राजकः समायातः । तेन सह कथाप्रसङ्गावस्थितो मम त्रासार्थं जर्जरवंशखंडेन चूडाकर्णो भूमिमताडयत् । वीणाकर्ण उवाच—सखे किमिति मम कथाविरक्तोऽन्यासक्तो भवान् । चूडाकर्णेनोक्तम्—मित्र नाहं विरक्तः । किंतु पश्यायं मूषिको ममापकारी सदा पात्रस्थं भिक्षान्नमुत्प्लुत्य भक्षयति । वीणाकर्णो नागदन्तकं विलोक्याह—कथं मूषिकः स्वल्पबलोऽप्येतावद्दूरमुत्पतति । तदत्र केनापि कारणेन भवितव्यम् । तथा चोक्तम्—

अकस्माद्युवती वृद्धं केशेष्वाकृष्य चुम्बति ।
पतिं निर्दयमालिङ्ग्य हेतुरत्र भविष्यति ॥ १०९ ॥

चूडाकर्णः पृच्छति—कथमेतत् । वीणाकर्णः कथयति—

॥ कथा ५ ॥

अस्ति गौडविषये कौशाम्बी नाम नगरी । तस्यां चन्दनदासनामा वणिग्महाधनो निवसति । तेन पश्चिमे वयसि वर्तमानेन कामाधिष्ठितचेतसा धनदर्पाल्लीलावती नाम वणिक्पुत्री परिणीता । सा च मकरकेतोर्विजयवैजयन्तीव यौवनवती बभूव । स च वृद्धपतिस्तस्याः संतोषाय नाभवत् । यतः ।

शशिनीव हिमार्तानां घर्मार्तानां रवाविव ।
मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ ॥ ११० ॥

अन्यच्च । पलितेष्वपि दृष्टेषु पुंसः का नाम कामिता ।
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः ॥ १११ ॥

स च वृद्धपतिस्तस्यामतीवानुरागवान् । यतः ।

धनाशा जीविताशा च गुर्वी प्राणभृतां सदा ।
वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥ ११२ ॥
नोपभोक्तुं न च त्यक्तुं शक्नोति विषयाञ्जरी ।
अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम् ॥ ११३ ॥

अथ सा लीलावती यौवनदर्पादतिक्रान्तकुलमर्यादा केनापि वणिक्पुत्रेण सहानुरागवती बभूव । यतः ।

---

श्रोत्रिय उच्यते । धुरीणः–धुरं वहति अर्हतीति वा । अग्र्यः–श्रेष्ठः । आवसथः–आयतनम् । नागदन्तः–भारयष्टिर्भित्यादौ निहितः हस्तिदन्तः काष्ठविशेषो वा । निर्दयं दृढम् । कामेन अधिष्ठितं चेतः यस्य तेन । मकरकेतोः कामस्य । विजयस्य वैजयन्तीविजयपताका । हिमेन–शीतेनार्तानां पीडितानां । पतौ–अपप्रयोग आर्षो वा पत्यौ इत्येव साधुः । पलितेषु दृष्टेषु पलितं जरसा [illegible] केशेषु । भैषज्यमौषधमिव उद्वेगजनकत्वात् । अति०–अतिक्रान्ता कुलमर्यादा कुलस्थितिः यया ।

स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रोत्सवे संगति-
गोष्ठीपुरुषसंनिधावनियमो वासो विदेशे तथा ।
संसर्गः सह पुंश्चलीभिरसकृद् वृत्तेर्निजायाः क्षतिः
पत्युर्वार्धकमीर्षितं प्रवसनं नाशस्य हेतुः स्त्रियाः ॥ ११४ ॥

अपरं च । पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नश्चान्यगृहे वासो नारीणां दूषणानि षट् ॥ ११५ ॥
सुरूपं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
० ० ० ० ० ॥ ११६ ॥

किं च । स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ ११७ ॥

स्त्रियो हि चपला नित्यं देवानामपि विश्रुतम् ।
ताश्चापि रक्षिता येषां ते नराः सुखभागिनः ॥ ११८ ॥

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ११९ ॥

अपरं च । घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्माद् घृतं च वह्निं च नैकत्र स्थापयेद् बुधः ॥ १२० ॥
न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता ।
प्रार्थनाभाव एवैकः सतीत्वे कारणं स्त्रियाः ॥ १२१ ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ १२२ ॥

एकदा सा लीलावती रत्नावलीकिरणकर्बुरे पर्यङ्के तेन वणिक्पुत्रेण सह विश्रम्भालापैः सुखासीना तमलक्षितोपस्थितं पतिमवलोक्य सहसोत्थाय केशेष्वाकृष्य गाढमालिङ्ग्य चुम्बितवती । तेनावसरेण जारश्च पलायितः । उक्तं च ।

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्वभावेनैव तच्छास्त्रं स्त्रीबुद्धौ सुप्रतिष्ठितम् ॥ १२३ ॥

तदालिङ्गनमवलोक्य समीपवर्तिनी कुट्टन्यचिन्तयत्—अकस्मादियमेनमुपगूढवती इति । ततस्तया कुट्टन्या तत्कारणं परिज्ञाय सा लीलावती गुप्तेन दण्डिता । अतोऽहं ब्रवीमि—अकस्माद्युवती वृद्धम् इत्यादि ॥ मूषिकबलोपस्तम्भेन केनापि कारणेनात्र भवितव्यम् । क्षणं विचिन्त्य परिव्राजकेनोक्तम्—कारणं चात्र धनबाहुल्यमेव भविष्यति । यतः ।

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा ।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १२४ ॥

---

स्वातन्त्र्यं–निरवग्रहत्वम् । निवसतिः चिरकालिका इति शेषः । संगतिःपरपुरुषाणामिति शेषः । गोष्ठीपुरुषसन्निधौ–सभ्यानां सन्निधौ । अनियमः अनियन्त्रितः । पुंश्चलीभिः–कुलटाभिः । असकृत् अनेकवारम् । वृत्तेः–उचिताचारस्य । क्षतिः भ्रंशः । ईर्षितं ईर्ष्या । प्रवसनं पत्युर्दूरदेशावस्थानम् । क्षणं–अवसरः । रक्षिता येषां–यैः । पिता रक्षति इत्या०–म. स्मृ. अ. ९, श्लो. ३. रत्नावली०–रत्नानां आवली तस्याः किरणाः तैः कर्बुरे चित्रिते । उपगूढवती–आलिङ्गितवती । गुप्तेन दण्डेन इति शेषः । कुट्टन्या तद्गोप्यं रक्षितव्यं इति किंचिद् द्रव्यदानं तस्या आवश्यकं बभूवेति भावः । बलोपस्तम्भकेन बलोपचयकारणेन ।

ततः खनित्रमादाय तेन विवरं खनित्वा चिरसंचितं मम धनं गृहीतम् । ततः प्रभृति निजशक्तिहीनः सत्त्वोत्साहरहितः स्वाहारमप्युत्पादयितुमक्षमः सत्रासं मन्दं मन्दमुपसर्पंश्चूडाकर्णेनाहमवलोकितः । ततस्तेनोक्तम्—

धनेन बलवाँल्लोके धनाद्भवति पण्डितः ।
पश्यैनं मूषिकं पापं स्वजातिसमतां गतम् ॥ १२५ ॥

किं च । अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः ।
क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ १२६ ॥

अपरं च । यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स हि पण्डितः ॥ १२७ ॥

अन्यच्च । अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च ।
मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥ १२८ ॥

अपरं च । तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
अन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १२९ ॥

एतत्सर्वमाकर्ण्य मयालोचितम्—ममात्रावस्थानमयुक्तमिदानीम् । यच्चान्यस्मा एतद्वृत्तान्तकथनं तदप्यनुचितम् । यतः ।'

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ १३० ॥

अपि च । आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ।
तपो दानापानं च नव गोप्यानि यत्नतः ॥ १३१ ॥

तथा चोक्तम् । अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे ।
मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ १३२ ॥

अन्यच्च । मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति ।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १३३ ॥

किं च । कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येत वनेऽथवा ॥ १३४ ॥ ॥

यच्चात्रैव याच्ञया जीवनं तदतीव गर्हितम् । यतः ।

वरं विभवहीनेन प्राणैः संतर्पितोऽनलः ।
नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३५ ॥

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः सत्त्वात्परिभ्रश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते ।
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १३६ ॥

किं च । वरं मौनं कार्यं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।

---

सत्त्वं चोत्साहश्च ताभ्यां रहितः । अल्पा मेधा यस्यासौ अल्पमेधाः तस्य । कुसरितः–कुत्सिताः सरितः अल्पतोया नद्यः । आयुः आयुःप्रमाणम् । तपः चरितं तपः । विभवहीनेन दरिद्रेण । उपचारपरिभ्रष्टःअदक्षिणः इत्यर्थः । ह्रियंलज्जाम् । परिभूयतेतिरस्क्रियते । बुद्ध्या–विवेकधिया ।



१. अर्थेन बलवान्सर्वो ह्यर्थाद्भवति पण्डितः । इ० पा० । २. मनस्तदेव इ० पा०

वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि-
र्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ १३७ ॥
वरं शून्या शाला न च खलु वरं दुष्टवृषभो
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः ।
वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ १३८ ॥

अपि च । सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् ।
हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥ १३९ ॥

इति विमृश्य तत्किमहं परपिण्डेनात्मानं पोषयामि । कष्टं भो । तदपि द्वितीयं मृत्युद्वारम् ।

पल्लवग्राहि पाण्डित्यं क्रयक्रीतं च मैथुनम् ।
भोजनं च पराधीनं तिस्रः पुंसां विडम्बनाः ॥ १४० ॥
रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ १४१ ॥

इत्यालोच्यापि लोभात्पुनरप्यर्थं ग्रहीतुं ग्रहमकरवम् । तथा चोक्तम् ।

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ १४२ ॥

ततोऽहं मन्दं मन्दमुपसर्पंस्तेन वीणाकर्णेन जर्जरवंशखण्डेन ताडितोऽचिन्तयम्—लुब्धो ह्यसंतुष्टो नियतमात्मद्रोही भवति । तथा च ।

सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥ १४३ ॥

अपरं च । संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १४४ ॥

किं च । तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ १४५ ॥

अपि च । असेवितेश्वरद्वारमदृष्टविरहव्यथम् ।
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवनम् ॥ १४६ ॥

यतः । न योजनशतं दूरं बाध्यमानस्य तृष्णया ।
संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ १४७ ॥

तदत्रावस्थोचितकार्यपरिच्छेदः श्रेयान् ।

को धर्मो भूतदया किं सौख्यमरोगिता जगति जन्तोः ।
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ १४८ ॥

---

पिशुनः खलः । भिक्षाशित्वं भैक्ष्येण वृत्तिः । अर्थिता याच्ञा । पल्लवग्राहि पल्लवं ग्रहीतुं शीलमस्य अल्पं, अनर्थकं वा । जर्जरः जीर्ण श्चासौ वंशखण्डश्च तेन । उपान०—उपानद्भ्यां गूढौ पादौ यस्य । असेविते०—असेवितानि ईश्वराणां द्वाराणि यस्मिन् । अवस्थो०—अवस्थायाः उचितं कार्यं तस्य परिच्छेदः निश्चयः । अपरिच्छेदकर्तृणाम्—न परिच्छेदस्य कर्तारः अपरिच्छेदकर्तारस्तेषाम् । उपस्थितायामापदि इतिकर्तव्यतामनिश्चित्य वर्तमाना-

---

१ एतत्स्थाने—धनलुब्धो ह्यसंतुष्टोऽनियतात्माऽजितेन्द्रियः । सर्वा एवापदस्तस्य यस्य तृप्तं न मानसम् । इति पद्यं क्वचित् ।

तथा च । परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः ।
अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ १४९ ॥

तथाहि । त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ १५० ॥

अपरं च । पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ १५१ ॥

इत्यालोच्याहं निर्जनवनमागतः । यतः ।

वरं वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालयं पक्वफलाम्बुभोजनम् ।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवनम् ॥ १५२ ॥

ततोऽस्मत्पुण्योदयादनेन मित्रेणाहं स्नेहानुवृत्त्यानुगृहीतः । अधुना च पुण्यपरम्परया भवदाश्रयः स्वर्ग एव मया प्राप्तः । यतः—

संसारविषवृक्षस्य द्वे एव रसवत्फले ।
काव्यामृतरसास्वादः संगमः सुजनैः सह ॥ १५३ ॥

मन्थर उवाच ।

अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनं
आयुष्यं जललोलबिन्दुचपलं फेनोपमं जीवितम् ।
धर्मं यो न करोति निन्दितमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ १५४ ॥

---

नाम् । त्यजेत्—अखिलकुलनाशे समुत्पन्ने एकं त्यक्त्वा कुलरक्षणं कर्तव्यमिति भावः । एवमग्रे । आत्मार्थे—आत्मसंरक्षणार्थं । तथा च श्रुतिः 'आत्मानं सततं गोपायीत' इति । स्वात्मार्थे इति पाठे स्वस्य आत्मा शरीरं तदर्थे । यदाह कालिदासः 'शरीरमाद्यं खलु धर्मसाधनम्' इति । अतस्तद्रक्षणायावश्यं यत्नो विधेय इत्यर्थः । पृथिवीं त्यजेत्—पृथिवीव्ययेनापि स्वसंरक्षणं कर्तव्यमिति भावः । पानीयं केवलं जलम् । निरायासं सुखलभ्यम् । भयोत्तरम्—भयं उत्तरं यस्मिन् भयानुगतम् । सुखं सुखकरम् । द्रुमालयं द्रुम एव आलयः यस्मिन् ( वने ) । पक्व०—पक्वानि फलानि अम्बु च भोजनं यस्मिन् । तृणानि इ०—यत्र तृणान्येव शय्या वल्कलमेव परिधानं तादृग्वनं वरम् । पादरजोपमाः पादरजेण उपमा येषाम् । अत्र रजशब्दोऽकारान्तः पुल्लिंगः । पादरजो यथा पादासक्तः भूत्वा तत्क्षणमेव पतति तद्वदर्थो अपि अस्थिराः तुच्छा एवेत्यर्थः । गिरिनदीवेगोपमं अतिशीघ्रगामि । जललोल०—जलस्य यः लोलः बिन्दुस्तद्वच्चपलं अतीवास्थायि । फेनोपमम् फेनेन जलकफेन उपमा यस्य क्षणभङ्गुरम् । अत्र समानार्थः श्लोकांशः भर्तृहरेः—आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीः । अर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ॥ इ० । निन्दितमतिः मननशालिनी बुद्धिः मतिः । निन्दिता मतिः तस्या अनुपयुज्यमानत्वात् यस्य । स्वर्गार्गलो०—अत्र स्वर्गशब्देन स्वर्गद्वारं लक्ष्यते तस्य अर्गला बन्धनकाष्ठं तस्य

---



१ द्वे फले अमृतोपमे । इ० पाठान्तरम्

युष्माभिरतिसंचयः कृतः । तस्यायं दोषः । शृणु ।

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परिवाह इवाम्भसाम् ॥ १५५ ॥

अन्यच्च । यदधोऽधः क्षितौ वित्तं निचखान मितंपचः ।
तदधोनिलयं गन्तुं चक्रे पन्थानमग्रतः ॥ १५६ ॥

अन्यच्च । निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति ।
परार्थभारवाहीव क्लेशस्यैव हि भाजनम् ॥ १५७ ॥

अपरं च । दानोपभोगहीनेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १५८ ॥

अन्यच्च । असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ १५९ ॥

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥ १६० ॥

उक्तं च । कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः ।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः ॥ १६१ ॥

तावाहतुः—कथमेतत् । मन्थरः कथयति—

॥ कथा ६ ॥

अस्ति कल्याणकटकवास्तव्यो भैरवो नाम व्याधः । स चैकदा मृगमन्विष्यन्विन्ध्याटवीं गतः । तेन तत्र व्यापादितं मृगमादाय गच्छता घोराकृतिः शूकरो दृष्टः । ततस्तेन व्याधेन मृगं भूमौ निधाय शूकरः शरेणाहतः । शूकरेणापि घनघोरगर्जनं कृत्वा स व्याधो मुष्कदेशे हतः संछिन्नद्रुम इव भूमौ निपपात । यतः ।

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः ।
निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते ॥ १६२ ॥

अथ तयोः पादास्फालनेन सर्पोऽपि मृतः । अथानन्तरं दीर्घरावो नाम जम्बुकः परिभ्रमन्नाहारार्थी तान्मृतान्मृगव्याधसर्पशूकरानपश्यत् । अचिन्तयच्च—अहो अद्य महद्भोज्यं मे समुपस्थितम् । अथवा ।

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १६३ ॥

---

उद्घातन । जरापरिगतःजरयाभिभूतः सन् । तडागोदर० तडागस्य उदरे संस्था येषां तेषाम्[1] 'पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ।' इति उत्तररामचरिते भवभूतिः । आत्मनो द्रव्यं भूमिसात्कर्तुमिच्छन् यां गर्तां कृपणः खनति सा एव तेन तस्याधोगमनार्थं मार्गः क्रियते इति भावः । परा०—परार्थं भारं वोढुं शीलमस्य । असंभोगेन—असंभोगाद्धेतोः । गम्यते ज्ञायते । यद्वा सम्बन्धः दुःखेन गम्यते युक्तः भवति इत्यर्थः । त्यागनियुक्तम्—त्यागे नियुक्तम् । कल्याण०—वसतीति वास्तव्यः कल्याणकटके वास्तव्यः कल्याणकटकवास्तव्यः । अत्र कटकशब्दः प्रान्तवाची । घन०—घनानामिव घोरगर्जनम् । पादास्फालनेन पादाघातेन, पादावमर्दनेन वा । दैवमत्रा०—सुखदुःखादिदाने सर्वत्र दैवमेव

---

१ अस्मात् श्लोकात्परं 'धनं वा पुरुषो ब्रह्मन् पुरुषं धनमेव वा । अवश्यमेकं त्यजति तस्मात् किं धनतृष्णया ॥ इति एकस्मिन्मुद्रितपुस्तके । धनेन किं यो न ददाति नाश्नुते बलेन किं यश्च रिपून्न बाधते । श्रुतेन किं यो न च धर्ममाचरेत्किमात्मना यो न जितेन्द्रियो भवेत् ॥ इति अन्यस्मिन् ...

तद्भवतु । एषां मांसैर्मासत्रयं मे सुखेन गमिष्यति ।

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः ॥ १६४ ॥

ततः प्रथमबुभुक्षायामिदं निःस्वादु कोदण्डलग्नं स्नायुबन्धनं खादामि । इत्युक्त्वा तथाकृते सति छिन्ने स्नायुबन्धन उत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरावः पञ्चत्वं गतः । अतोऽहं ब्रवीमि–कर्तव्यः संचयो नित्यम् इत्यादि । तथा च ।

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ १६५ ॥

किं च । यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥ १६६ ॥

यातु । किमिदानीमतिक्रान्तोपवर्णनेन । यतः ।

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ १६७ ॥

तत्सखे सर्वदा त्वया सोत्साहेन भवितव्यम् । यतः ।

शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् ।
सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ १६८ ॥

अन्यच्च । न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि ।
अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ॥ १६९ ॥

तदत्र सखे दशाविशेषे शान्तिः करणीया । एतदप्यतिकष्टं त्वया न मन्तव्यम् । यतः

राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः ।
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ॥ १७० ॥
इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत् ।

कापुरुषवचनमेतत् । यतः ।

स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः ।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ १७१ ॥

को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः । ७२ ॥

---

प्रभवति । न मुह्यन्ति–मोहं न प्राप्नुवन्ति । किंकर्तव्यतामूढा न भवन्तीत्यर्थः । क्रियावान्–य आत्मनः शास्त्रज्ञानं क्रियया व्यनक्ति स एव परमार्थतो विद्वान् इत्यर्थः । आतुरः–रुग्णः । नाममात्रेण पानं विनेत्यर्थः । अध्यवसायभीरोः–अध्यवसायः 'उत्साहोऽध्यवसायः स्यात्' इत्यमरः । उत्साहपूर्वको यत्नः इत्यर्थः । तस्माद्भीरोः । विज्ञानविधिः विशिष्टज्ञानकरणं । केवलं ज्ञानसंपादनं इति यावत् । अर्थं वस्तु । मनस्विनः प्रशस्तं मनः अस्यास्तीति मनस्वी । 'अस्मायामेधास्रजो विनिः' इति मतुबर्थे विनिः । दंष्ट्रा०–दंष्ट्रे च नखाश्च लाङ्गुलं च दंष्ट्रानखलाङ्गुलं प्रहरणं यस्य । हत०–द्वाभ्यां पिबतीति द्विपः । द्विपेष्विन्द्रः

---

१ मासमेकं मासिकं यावज्जीवनं मे भविष्यति । तदत्र प्रथमबुभुक्षायामित्या० पा०
२ अतिक्रान्तोपालम्भेन इ० पा० । ३ सुचिन्त्यमप्यौ० । ४ इयं पंक्तिर्नास्ति क्वचित् ।

अपरं च । निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ १७३ ॥

अन्यच्च । सुखमापतितं सेव्यं दुःखमापतितं तथा ।
चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥ १७४ ॥

अन्यच्च । उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तं ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ १७५ ॥

विशेषतश्च । विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं
समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैंहीं किं श्वा धृतकनकमालोऽपि लभते ॥ १७६ ॥

धनवानिति हि मदस्ते किं गतविभवो विषादमुपयासि
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ १७७ ॥

अपरं च । अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १७८ ॥

वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता ।
गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ १७९ ॥

अपि च सखे ।
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ १८० ॥

अपरं च । सतां रहस्यं शृणु मित्र ।
जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु ।
मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ १८१ ॥

अपरं च । धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १८२ ॥

यतः । यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान् ॥ १८३ ॥
राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १८४ ॥

---

इव द्विपेन्द्रः । हतः यः द्विपेन्द्रः तस्य रुधिरैः । निपानं कूपतडागादि । विवशाः परतन्त्राः । क्रियाविधिज्ञं क्रिया च विधिः शास्त्राज्ञा च क्रियाविधी तौ जानीते इति तम् । स्पृशति–लभते इत्यर्थः । परिभवपदं याति–अवज्ञायते, तिरस्क्रियते । स्वभावादुद्भूतां निसर्गप्राप्ताम् । गुण०–गुणानां शौर्यादीनां समुदयः तस्य अवाप्तिः तस्या विषयां स्थानभूताम् । सैंहीं सिंहस्य इयं ताम् । वृत्त्यर्थं–जीविकालाभार्थम् । वित्तेहा द्रव्यतृष्णा । निरीहता तृष्णाभावः । प्रक्षालना०–एतद्वाक्यं न्यायत्वेनोदाह्रियते 'पंकप्रक्षालनन्यायः' इति संज्ञायते च । तस्यार्थः निन्दितकरणात्तदकरणं वरमिति । नक्रैः–( स्वस्थानात् ) न क्रामतीति नक्रः । 'नभ्राड्'–इत्यादिना नञः प्रकृतिभावः । नक्रैः इति पदं सर्वेषां जलजन्तूनामुपलक्षणम् । वित्तवान् भक्ष्यते इति पूरणीयं । सर्वे वित्तवन्त-

---

१ प्रवणाः इ० पा० । २ यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव तथा इ० पा० ।

तथा हि । जन्मनि क्लेशबहुले किं नु दुःखमतः परम् ।
इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ १८५ ॥
अन्यच्च भ्रातः शृणु ।
धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते ।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ १८६ ॥
तृष्णां[1] चेह परित्यज्य को दरिद्रः क ईश्वरः ।
तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ १८७ ॥
अपरं च । यद्यदेव हि वाञ्छेत ततो वाञ्छानुवर्तते ।
प्राप्तः एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ १८८ ॥
किं बहुना । मम पक्षपातेन मयैव सहात्र कालो नीयताम् । यतः ।
आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः ।
परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्[2] ॥ १८९ ॥
इति श्रुत्वा लघुपतनको ब्रूते—धन्योऽसि मन्थर सर्वदा श्लाघ्यगुणोऽसि । यतः ।
सन्त एव सतां नित्यमापदुद्धरणक्षमाः ।
गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ १९० ॥
श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः[3] स धन्यः ॥
यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥ १९१ ॥
तदेवं ते स्वेच्छाहारविहारं कुर्वाणाः संतुष्टाः सुखं निवसन्ति ।

अथ कदाचिच्चित्राङ्गनामा मृगः केनापि त्रासितस्तत्रागत्य मिलितः । ततः तत्पश्चादायान्तं भयहेतुमालोक्य मन्थरो जलं प्रविष्टः । मूषिकश्च विवरं गतः । काकोऽप्युड्डीय वृक्षाग्रमारूढः । ततो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यायातीत्यालोचितम् । पश्चात्तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः । मन्थरेणोक्तम्—भद्रम् । मृग स्वागतम् । स्वेच्छयोदकाद्याहारोऽनुभूयताम् । अत्रावस्थानेन वनमिदं सनाथीक्रियताम् । चित्राङ्गो ब्रूते—लुब्धकत्रासितोऽहं भवतां शरणमागतः । भवद्भिः सह सख्यमिच्छामि । हिरण्यकोऽवदत—मित्र तत्तावदस्माभिः सहायत्नेन निष्पन्नमेव भवतः । यतः ।
औरसं कृतसंबन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १९२ ॥

तदत्र भवता स्वगृहनिर्विशेषं स्थीयताम् । तच्छ्रुत्वा मृगः सानन्दो भूत्वा स्वेच्छाहारं कृत्वा पानीयं पीत्वा जलासन्नतरुच्छायायामुपविष्टः । अथ मन्थरेणोक्तम्—सखे मृग एतस्मिन्निर्जने वने केन त्रासितोऽसि । कदाचित्किं व्याधाः संचरन्ति । मृगेणोक्तम् ।

---

मुपजीवन्तीत्यर्थः । सलिलात् जलात् । इच्छासम्पत् यावती इच्छा तावती सम्पत् । प्रसरः—अवकाशः । पक्षपातेन—स्नेहानुवृत्त्येत्यर्थः । परित्यागाः दानानि । 'त्यागो दाने च वर्जने' इति मेदिनी । निःसङ्गाः—फलापेक्षारहिताः । 'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे' इति भगवदुक्तत्वात् । धुरंधराः धुरं धारयन्तीति । गजोद्धरणभारं निर्वोढुं क्षमाः इत्यर्थः । यस्यार्थिनः—अत्र कालिदासः—क्षुद्रेपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव । भयहेतुम्—भयस्य हेतुं कारणं व्याधादिकम् । औरसम् उरसा निर्मितम् । यथा भ्रात्रादि । स्वगृहनिर्विशेषं स्वगृहात् निर्गतः विशेषः यस्मिन्कर्मणि तद्यथा तथा ।



---

१ तृष्णया चेत्परित्यक्तः इ०पा० । २ न भवन्त्यमहात्मनाम् ॥ इ०पा० । ३ सत्पुरुषव्रतश्च इ०पा० ।

अस्ति कलिङ्गविषये रुक्माङ्गदो नाम नरपतिः । स च दिग्विजयव्यापारक्रमेणागत्य चन्द्रभागानदीतीरे समावासितकटको वर्तते । प्रातश्च तेनात्रागत्य कर्पूरसरःसमीपे भवितव्यमिति व्याधानां मुखात्किंवदन्ती श्रूयते । तदत्रापि प्रातरवस्थानं भयहेतुकमित्यालोच्य यथावसरकार्यमारभ्यताम् । तच्छ्रुत्वा कूर्मः सभयमाह—जलाशयान्तरं गच्छामि । काकमृगावप्युक्तवन्तौ—एवमस्तु । ततो हिरण्यको विहस्याह—जलाशयान्तरे प्राप्ते मन्थरस्य कुशलम् । स्थले, गच्छतः कः प्रतीकारः । यतः

अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम् ।
स्वभूमिः[१] श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥ १९३ ॥

सखे लघुपतनक अनेनोपदेशेन तथा भवितव्यम् ।

स्वयं वीक्ष्य यथा वध्वाः पीडितं कुचकुड्मलम् ।
वणिक्पुत्रोऽभवद्दुःखी त्वं तथैव भविष्यसि ॥ १९४ ॥

त ऊचुः—कथमेतत् । हिरण्यकः कथयति—

॥ कथा ७ ॥

अस्ति कान्यकुब्जविषये वीरसेनो नाम राजा । तेन वीरपुरनाम्नि नगरे तुङ्गबलो नाम राजपुत्रो भोगपतिः कृतः । स च महाधनस्तरुण एकदा स्वनगरे भ्राम्यन्नतिप्रौढयौवनां लावण्यवतीं नाम वणिक्पुत्रवधूमालोकयामास । ततः स्वहर्म्यं गत्वा स्मराकुलमतिस्तस्याः कृते दूतीं प्रेषितवान् । यतः ।

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १९५ ॥

सापि लावण्यवती तदवलोकनक्षणात्प्रभृति स्मरशरप्रहारजर्जरितहृदया तदेकचित्ताभवत् । तथा ह्युक्तम्—

असत्यं साहसं माया मात्सर्यं चातिलुब्धता ।
निर्गुणत्वमशौचत्वं स्त्रीणां दोषाः स्वभावजाः ॥ १९६ ॥

---

०विषये देशे । समावासितकटकः—समावासितं कटकं सेना येन सः । किंवदन्ती—जनश्रुतिः । 'कोपि वादः' किंवदन्ती ( उ. सू. ३. १२८ पा. ७. १. ३. ) यद्वा 'किंवदन्ती' इति आख्यायमाना । अनुकरणशब्दादाख्यानण्यन्तात् इत्याद्यमरटीकाकृत् । यथावसरकार्यम्—अवसरमनतिक्रम्य वर्तते यथावसरं कालोचितं कार्यम् । जलाशयान्तरम्—अन्यो जलाशयः जलाशयान्तरम् । नित्यसमासः । भोगपतिः—प्रान्ताधिपतिः, देशविभागस्य शासिता । प्रभवति इन्द्रियाणां—इन्द्रियाणि वशीकर्तुं शक्नोति । भ्रूचाप०—भ्रूरेव चापः भ्रूचापः । आदौ आकृष्टाः पश्चान्मुक्ताः आकृष्टमुक्ताः । भ्रूचापादाकृष्टमुक्ताः भ्रूचापेन आकृष्टाः मुक्ताश्चेति वा । श्रवण०—श्रवणस्य पन्थाः श्रवणपथः तं गताः । नील०—नीलपुंखवन्तः । धृतिमुषः—धृतिं मुष्णन्तीति । दृष्टिबाणाः—दृष्टय एव बाणाः । स्मरेति—स्मरस्य शरास्तेषां प्रहारास्तैर्जर्जरितं हृदयं यस्याः । तदेकचित्ता—स एव एकः तदेकः तस्मिन् स वा चित्तं चित्ते वा यस्याः । तेन सह एकं चित्तं यस्याः सा इति वा । माया—कपटाचरणम् । निर्गुणत्वं—गुणनिरासः । अशौचत्वं—नास्ति शौचं पावित्र्यं यस्याः सा अशौचा तस्याः भावः

---

१ को निधिः । इ. पा. । २ स्वभूमिश्च अदीनां राज्ञां [illegible] परं बलम् । इ. पा. ।

अथ दूतीवचनं श्रुत्वा लावण्यवत्युवाच—अहं पतिव्रता कथमेतस्मिन्नधर्मे पतिलङ्घने प्रवर्ते । यतः ।

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ १९७ ॥

न सा भार्येति वक्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां संतुष्टाः सर्वदेवताः ॥ १९८ ॥

ततो यद्यदादिशति मे प्राणेश्वरस्तदेवाहमविचारितं करोमि । दूत्योक्तम्–सत्यमेतत् । लावण्यवत्युवाच—ध्रुवं सत्यमेतत् । ततो दूतिकया गत्वा तत्तत्सर्वं तुङ्गबलस्याग्रे निवेदितं । तच्छ्रुत्वा तुङ्गबलोऽब्रवीत्—स्वामिनानीय समर्पयितव्येति कथमेतच्छक्यम् । कुट्टन्याह—उपायः क्रियताम् । तथा चोक्तम्—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना ॥ १९९ ॥

राजपुत्रः पृच्छति—कथमेतत् । सा कथयति—

॥ कथा ८ ॥

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म–यद्ययं केनाप्युपायेन म्रियते तदास्माकमेतद्देहेन मासचतुष्टयस्य स्वेच्छया भोजनं भविष्यति । तत्रैकेन वृद्धशृगालेन प्रतिज्ञातम्—मया बुद्धिप्रभावादस्य मरणं साधयितव्यम् । अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टांगपातं प्रणम्योवाच—देव दृष्टिप्रसादं कुरु । हस्ती ब्रूते—कस्त्वम् । कुतः समायातः । सोऽवदत्–जम्बुकोऽहम् । सर्ववनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः । यद्विना राज्ञावस्थातुं न युक्तं तदत्राटवीराज्येऽभिषेक्तुं भवान्सर्वस्वामिगुणोपेतो निरूपितः । यतः ।

यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ २०० ॥

अपरं च । राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ २०१ ॥

अन्यच्च । पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ २०२ ॥

किं च । नियतविषयवर्ती प्रायशो दण्डयोगा-
ज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः ।

---

अशौचत्वम् । गृहे गृहकर्मणि । प्रजावती प्रशस्तापत्यवती । पतिप्राणा—पतिरेव प्राणाः यस्याः सा । म. भा. आ. प. २४. ४० । स्वेच्छया यथेच्छम् । साष्टाङ्गपातं प्रणम्य–जानुभ्यां च तथा पद्भ्यामुरसा शिरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोष्टाङ्ग ईरितः ॥ कुलेति०–कुलं च अभिजनश्च आचारश्च तैः । विकले असति । नियत०–परवशे अस्मिन् जगति पुरुषः प्रायशः दण्डयोगात् नियतविषयवर्ती नियतः विषयः नियतविषयः तस्मिन् वर्तते सः । स्वकर्मकारी अत्याचारमकुर्वन् ( दृश्यते ) । अथवा ( यः कश्चित् ) नियतविषयवर्ती ( दृश्यते स ) प्रायः दण्डयोगात् ( तथा दृश्यते ) साधुवृत्तः ( तु ) दुर्लभः ।



---

१ अग्निसाक्षिकमर्यादो भर्ता हि शरणं स्त्रियाः । इ. पा. ।

कृशमपि विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याभ्युपैति ॥ २०३ ॥

तद्यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन । इत्युक्त्वोत्थाय चलितः । ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगालवर्त्मना धावन्महापङ्के निमग्नः । ततस्तेन हस्तिनोक्तम्—सखे शृगाल किमधुना विधेयम् । पङ्के निपतितोऽहं म्रिये । परावृत्य पश्य । शृगालेन विहस्योक्तम्—देव मम पुच्छकावलम्बनं कृत्वोत्तिष्ठ । यन्मद्विधस्य वचसि त्वया प्रत्ययः कृतस्तदनुभूयतामशरणं दुःखम् । तथा चोक्तम्—

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि ।
तथाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥ २०४ ॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः । अतोऽहं ब्रवीमि—उपायेन हि यच्छक्यम् इत्यादि ॥ ततः कुट्टन्युपदेशेन तं चारुदत्तनामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार । ततोऽसौ तेन सर्वविश्वासकार्येषु नियोजितः ।

एकदा तेन राजपुत्रेण स्नातानुलिप्तेन कनकरत्नालंकारधारिणा प्रोक्तम्—अद्यारभ्य मासमेकं मया गौरीव्रतं कर्तव्यम् । तदत्र प्रतिरात्रमेकां कुलीनां युवतीमानीय समर्पय । सा मया यथोचितेन विधिना पूजयितव्या । ततः स चारुदत्तस्तथाविधां नवयुवतीमानीय समर्पयति । पश्चात्प्रच्छन्नः सन्किमयं करोतीति निरूपयति । स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूराद्वस्त्रालंकारगन्धचन्दनैः संपूज्य रक्षकं दत्वा प्रस्थापयति । अथ वणिक्पुत्रेण तद् दृष्ट्वोपजातविश्वासेन लोभाकृष्टमनसा स्ववधूर्लावण्यवती समानीय समर्पिता । स च तुङ्गबलस्तां हृदयप्रियां लावण्यवतीं विज्ञाय ससंभ्रममुत्थाय निर्भरमालिङ्ग्य निमीलिताक्षः पर्यङ्के तया सह विललास । तदवलोक्य वणिक्पुत्रश्चित्रलिखित इवेतिकर्तव्यतामूढः परं विषादमुपगतः । अतोऽहं ब्रवीमि—स्वयं वीक्ष्य इत्यादि ॥ तथा त्वयापि भवितव्यम् इति ।

तद्धितवचनमवधीर्य महता भयेन विमुग्ध इव तं जलाशयमुत्सृज्य मन्थरश्चलितः । तेऽपि हिरण्यकादयः स्नेहादनिष्टं शङ्कमाना मन्थरमनुगच्छन्ति । ततः स्थले गच्छन्केनापि व्याधेन काननं पर्यटता मन्थरः प्राप्तः । प्राप्य च तं गृहीत्वोत्थाप्य धनुषि बद्ध्वा भ्रमक्लेशात्क्षुत्पिपासाकुलः स्वगृहाभिमुखश्चलितः । अथ मृगवायसमूषिकाः परं विषादं गच्छन्तस्तमनुजग्मुः । ततो हिरण्यको विलपति—

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ २०५ ॥

---

विकलं विकलाङ्गमित्यर्थः । अपिः सर्वत्र योज्यः विकलमपि पतिं कुलनारी अपि इत्यन्वयः । मालिनीवृत्तम् । तल्लक्षणम्—ननमयययुतेयं मालिनी भोगिलोकैः । लग्नवेला शुभराशेरुदयवेला सुमुहूर्तः । 'राशीनामुदयो लग्नम्' इत्यमरः । अशरणं नास्ति शरणं यस्य । अप्रतीकारं इति यावत् । यदि सत्सङ्गनिरतः भविष्यसि तर्हि भविष्यसि आयत्यां सुखेन वत्स्यसि । यदि असज्जनमेलके पतिष्यसि तर्हि पतिष्यसि तव पातः ध्रुवं भविष्यति । 'यदा सत्संगरहितः' इति पाठे यदा यदा सज्जनसंगतिं हास्यसि तदा तदा शठानां हस्ते पतिष्यसि इत्यर्थः । तद्धित०—तत् हिरण्यकोक्तं हितं कल्याणोदर्कं इत्यर्थः । विमुग्धः कर्तव्यमूढः । अनर्थाः अनर्थाः सन्ति । छिद्रेष्विति—आपदापदमनुबध्नातीति भावः ।

स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते ।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ २०६ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ २०७ ॥

इति मुहुर्विचिन्त्य—अहो दुर्दैवम् । यतः ।

स्वकर्मसंतानविचेष्टितानि कालान्तरावर्तिशुभाशुभानि ।
इहैव दृष्टानि मयैव तानि जन्मान्तराणीव दशान्तराणि ॥ २०८ ॥

अथवेत्थमेवैतत् । कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ २०९ ॥

पुनर्विमृश्याह—शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २१० ॥

किं च । मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ २११ ॥

इति बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह—यावदयं व्याधो वनान्न निःसरति तावन्मन्थरं मोचयितुं यत्नः क्रियताम् । तावूचतुः—सत्वरं कार्यमुच्यताम् । हिरण्यको ब्रूते—चित्राङ्गो जलसमीपं गत्वा मृतमिवात्मानं दर्शयतु । काकश्च तस्योपरि स्थित्वा चञ्च्वा किमपि विलिखतु । नूनमनेन लुब्धकेन तत्र कच्छपं परित्यज्य मृगमांसार्थिना सत्वरं गन्तव्यम् । ततोऽहं मन्थरस्य बन्धनं छेत्स्यामि । संनिहिते

---

अकृत्रिमसौहार्दम् कार्येण निर्वर्तितं कृत्रिमं । न कृत्रिमं अकृत्रिमं सहजं सौहार्दं यस्य स्वकर्मेति—स्वस्य कर्मणां संतानं अविरतः प्रवाहः । स्वफलभोगदानाय प्रवृत्ता कर्मसंत[illegible] रिति यावत् । तस्य विचेष्टितानि विलसितानि कालान्तरावर्तिशुभाशुभानि कालान्तरेषु आवर्तितुं शीलं येषां तानि कालान्तरावर्तीनि च तानि शुभानि अशुभानि च । यानि दशान्तराणि अन्याः दशाः दशान्तराणि । तानि इहैव जन्मनि मयैव प्रस्तुतशरीरावच्छिन्नेन इत्यर्थः । जन्मान्तराणीव दृष्टानि उपभुक्तानि । संनिहितापायः संनिहिताः अपाया यस्य । सापगमाः अपगमेन विरहेण सहिताः । उत्पादि—उत्पन्नं वस्तुजातम् । शोकाराति०—शोक एवारातिः तस्माद्भयं तस्मात्त्रायते तत् । प्रीतिविश्रम्भ०—प्रीतिः हर्षः विश्रम्भः च तयोः भाजनं आस्पदम् । अक्षरद्वयम् अक्षरयोर्द्वयं यस्य तद् इति रत्नविशेषणम् । मित्रमिति—यद् मित्रं नयनयोः प्रीतिरसायनं प्रीतेः रसायनमिव रसायनम् । वीर्यवद्रसायनं यथाऽमोघफलं तथेदमपि मित्ररसायनं आत्मनः आह्लादजननकार्यात्कदापि न व्यभिचरतीति भावः । चेतसः आनन्दनं हृदयानन्दनकारि । यच्च आत्मनः मित्रेण सह सुखदुःखयोः पात्रं भवेत् । आपदि सुखे च समक्रियमित्यर्थः । तद् दुर्लभं सहसा न लभ्यते इत्यर्थः । ये चान्ये अन्यादृशः पुरुषाः द्रव्याभिलाषाकुलाः सन्तः समृद्धिसमये न तु आपदि सुहृदः भवन्तीति शेषः ते सर्वत्र मिलन्ति सौकर्येण लभ्यन्ते । तेषां तत्त्वस्य निकषग्रावा कषपट्टिका विपदेव । विपद्येव ते सुहृदो वा दुर्हृदो वेति स्वरूपतः प्रतीयन्ते । कार्यं यत्कर्तुमुचितं तत् ।

---



१ स्वभावजं, भाग्येनैव हि भाग्यैरेव प्रजा० । इ० पा० । २ शोकार्तिभयसंत्राणं । इ० पा० ।

लुब्धके भवद्भ्यां पलायितव्यम् । चित्राङ्गलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठितं सति स व्याधः श्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टस्तथाविधं मृगमपश्यत् । ततः कर्तरिकामादाय प्रहृष्टमना मृगान्तिकं चलितः । तत्रान्तरे हिरण्यकेनागत्य मन्थरस्य बन्धनं छिन्नम् । स कूर्मः सत्वरं जलाशयं प्रविवेश । स मृग आसन्नं तं व्याधं विलोक्योत्थाय पलायितः । प्रत्यावृत्य लुब्धको यावत्तरुतलमायाति तावत्कूर्ममपश्यन्नचिन्तयत्–उचितमेवैतन्ममासमीक्ष्यकारिणः । यतः ।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ २१२ ॥

ततोऽसौ स्वकर्मवशान्निराशः कटकं प्रविष्टः । मन्थरादयश्च सर्वे विमुक्तापदः स्वस्थानं गत्वा यथासुखमास्थिताः ॥

अथ राजपुत्रैः सानन्दमुक्तम्––सर्वं श्रुतवन्तः सुखिनो वयम् । सिद्धं नः समीहितम् । विष्णुशर्मोवाच––एतावता भवतामभिलषितं संपन्नम् । अपरमपीदमस्तु–

मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालम्ब्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः ।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्धचूडामणिः ॥ २१३ ॥

---

# ॥ सुहृद्भेदः ॥

अथ राजपुत्रा ऊचुः––आर्य मित्रलाभः श्रुतस्तावदस्माभिः । इदानीं सुहृद्भेदं श्रोतुमिच्छामः । विष्णुशर्मोवाच––सुहृद्भेदं तावच्छ्रुणुत यस्यायमाद्यः श्लोकः––

वर्धमानो महास्नेहो मृगेन्द्रवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

राजपुत्रैरुक्तम्—कथमेतत् । विष्णुशर्मा कथयति––

अस्ति दक्षिणापथे सुवर्णवती नाम नगरी । तत्र वर्धमानो नाम वणिग्निवसति । तस्य प्रचुरेऽपि वित्तेऽपरान्बन्धूनतिसमृद्धानवलोक्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव । यतः ।

अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ २ ॥

---

असमीक्ष्यकारिणः अविचार्य कर्म कुर्वतः । अविमृश्यकारिणः जाल्मस्य । जाल्मोऽसमीक्ष्यकारी स्यात् इत्यमरः । कटकं–सेनानिवेशम् । शश्वत्स्वधर्मे स्थिताः कदापि प्रजापालनरूपस्वधर्मान्न व्यभिचरन्तः । सुकृतिनां वः । नवोढेव अचिरपरिणीता वधूरिव । एतेन तस्या राजपुत्रैरचिरपरिग्रहः सूचितः । स्त्रीत्वं च ध्वनितम् । मित्रं इत्यादि भरतवाक्यं काव्योपसंहारं दर्शयति । तदुक्तम् ' वरदानस्य उक्तिर्या सा काव्य उपसंहृतिः । ' इति ।
इति हितोपदेशे मित्रलाभो नाम प्रथमः कथासंग्रहः समाप्तः ।

सुहृद्भेदः—सुहृदोः भेदः । शेषं मित्रलाभवत् । पिशुनेन—खलेन सुहृद्भेदकरेण इति यावत् । पिशुनो दुर्जनः खलः इत्यमरः । दक्षिणापथे—दक्षिणदेशे । अधोधः इति—उच्च-

---

१ अथ राजपुत्रैः सानन्दचेतोभिः सर्वं तच्छ्रुतमुक्तं च । सर्वे ते सुखिनः सम्पन्नास्तस्मात्सिद्धं नः समीहितम् । २ ० ग । ३ निपातितः । ४ ० ० ग । ५ ० ० ग ।

अपरं च । ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ३ ॥

अन्यच्च । अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीणम् ।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः ॥ ४ ॥

किं च । आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् ।
संतोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ५ ॥

यतः । संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ६ ॥

अपरं च । निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ७ ॥

तथा चोक्तम् । अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया ।
रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ८ ॥

[1]यतोऽलब्धमनिच्छतोऽनुद्योगादर्थाप्राप्तिरेव । लब्धस्याप्यरक्षितस्य निधेरपि स्वयं विनाशः । अपि च । अवर्धमानश्चार्थः काले स्वल्पव्ययोऽप्यञ्जनवत्क्षयमेति । अनुपभुज्यमानश्च निष्प्रयोजन एव सः । तथा चोक्तम्—

धनेन किं यो न ददाति नाश्नुते
बलेन किं यश्च रिपून्न बाधते ॥
श्रुतेन किं यो न च धर्ममाचरे-
त्किमात्मना यो न जितेन्द्रियो भवेत् ॥ ९ ॥

---

पदस्थमपि आत्मानं लघुमेव मन्यमानस्य कस्य महिमा न उपचीयत वर्धते । सर्वस्यापि मानस्य कस्य महिमा न उपचीयत वर्धते । सर्वस्यापि उपचीयत एव । किंतु लघुपदभागपि य आत्मानं उच्चपदस्थं मन्यते स दरिद्र एव भवति । अयं भावः--प्रभूतधनोऽपि य आत्मानमल्पधनं मन्यते सोधिकद्रव्यप्राप्तये यत्नं विदधाति धनाढ्यश्च भवति । एवं तस्य महिमा उपचीयते । यः कश्चित्पुनः स्वल्पधनोपि आत्मानं विपुलधनं मन्यते सोर्थप्राप्तये न व्यवस्यति आत्मानं तथा दर्शयितुं प्रयतमानश्च ऋणादिनाऽकिंचनतां याति एवं तस्य महिमाऽपक्षीयते । तदुक्तम् कालिदासेन ‘ रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय । ’ इति मेघदूते । अयमर्थः पुरस्तात् ‘ संपदा सुस्थितंमन्यः ’ इत्यत्र ग्रन्थकृतैव स्फुटीकृतः । शशिनः वंशस्य इति शेषः । अव्यवसायिनम्—व्यवसायः अस्यास्तीति व्यवसायी न व्यवसायी अव्यवसायी तं अनुद्योगिनम् । अथवा ताच्छील्ये णिनिः । दैवपरं—दैवं परं यस्य दैवावलम्बिनमित्यर्थः । प्रमदा प्रकृष्टो मदोऽस्या अस्तीति तरुणी । उपगूहितुं आलिंगितुम् । व्याघाताः—विघ्नाः प्रतिबन्धाः । सीमन्तिनी—सीमन्तः केशवेशः अस्या अस्ति इति । लिप्सेत—लब्धुं इच्छेत् । अवेक्षया व्ययापव्ययादौ सम्यक्पर्यालोचनेन । तीर्थेषु पात्रेषु । तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु । इति मेदिनी । अर्थयोगात्—अर्थस्य योगात् विद्यमानधनसाधनात् । यः अलब्धं इच्छति स तत्प्राप्त्यर्थं विद्यमानधनेन व्यवसायं कुरुते अधिकं धनं लभते चेति । पाठान्तरस्यार्थः । अञ्जनवत्—अञ्जनं यथा स्वल्पमपि उपयुज्यमानं व्ययमेति तथा । धनेन—तस्य



१ अलब्धमिच्छतोर्थयोगादर्थस्य प्राप्तिरेव इ. पा. ।

अन्यच्च । अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम् ॥
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ १० ॥

यतः । जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ ११ ॥

दानोपभोगरहिता दिवसा यस्य यान्ति वै ।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति ॥ १२ ॥

इति संचिन्त्य नन्दकसंजीवकनामानौ वृषभौ धुरि नियोज्य शकटं नानाविधद्रव्यपूर्णं कृत्वा वाणिज्येन गतः काश्मीरं प्रति ।

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ १३ ॥

अथ गच्छतस्तस्य सुदुर्गनाम्नि महारण्ये संजीवको भग्नजानुर्निपतितः । तमालोक्य वर्धमानोऽचिन्तयत्—

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १४ ॥

किं तु । विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम् ॥ १५ ॥

इति संचिन्त्य संजीवकं तत्र परित्यज्य वर्धमानः पुनः स्वयं धर्मपुरं नाम नगरं गत्वा महाकायमन्यं वृषभमेकं समानीय धुरि नियोज्य चलितः । ततः संजीवकोऽपि कथं कथमपि खुरत्रये भारं कृत्वोत्थितः । यतः ।

निमग्नस्य पयोराशौ पर्वतात्पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ १६ ॥

नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ १७ ॥

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः ।
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १८ ॥

ततो दिनेषु गच्छत्सु संजीवकः स्वेच्छाहारविहारं कृत्वारण्यं भ्राम्यन्हृष्टपुष्टाङ्गो बलवन्ननाद । तस्मिन्वने पिङ्गलकनामा सिंहः स्वभुजोपार्जितराज्यसुखमनुभवन्निवसति । तथा चोक्तम्—

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ १९ ॥

---

इति सर्वत्राध्याहार्यम् । अवन्ध्यं सफलम् । दानाध्ययनकर्मसु—दानं च अध्ययनं च कर्म व्यवसायश्च तेषु । तैः इति यावत् । तृतीयार्थे सप्तमी । यद्वा एतेषां मध्ये एकेन अवन्ध्यं दिवसं कुर्यात् । कर्मकारभस्त्रा कर्मकारः लोहकारादिस्तस्य भस्त्रा दृतिः चर्मप्रसेविका । 'भस्त्रा चर्मप्रसेविका' इत्यमरः । वाणिज्येन—वाणिज्यं कर्तुम् । हेतौ तृतीया । विधेः—दैवस्य । विस्मयः चित्तस्य पर्याकुलता । हेयस्त्यक्तव्यः । प्रत्यूहः—विघ्नः । कथं कथमपि महता प्रयासेन । आयुः दीर्घमायुः स्यात् चेत् । सति आयुषि मर्माभिघातः न भवति इति भावः । बलवत्—उच्चैः ।

स चैकदा पिपासाकुलितः पानीयं पातुं यमुनाकच्छमगच्छत् । तेन च तत्र सिंहेनाननुभूतपूर्वमकालघनगर्जितमिव संजीवकनर्दितमश्रावि । तच्छ्रुत्वा पानीयमपीत्वा सचकितः परिवृत्य स्वस्थानमागत्य किमिदमित्यालोचयंस्तूर्ष्णीं स्थितः । स च तथाविधः करटकदमनकाभ्यामस्य मन्त्रिपुत्राभ्यां शृगालाभ्यां दृष्टः । तं तथाविधं दृष्ट्वा दमनकः करटकमाह—सखे करटक किमित्ययमुदकार्थी स्वामी पानीयमपीत्वा सचकितो मन्दं मन्दमवतिष्ठते । करटको ब्रूते--मित्र दमनक अस्मन्मतेनास्य सेवैव न क्रियते । यदि तथा भवति तर्हि किमनेन स्वामिचेष्टानिरूपणेनास्माकम् । यतोऽनेन राज्ञा विनापराधेन चिरमवधीरिताभ्यामावाभ्यां महद्दुःखमनुभूतम् ।

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २० ॥

अपरं च । शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥ २१ ॥

अन्यच्च । एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ २२ ॥

अपरं च । एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ २३ ॥
अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ २४ ॥

किं च । या प्रकृत्यैव चपला निपतत्यशुचावपि ।
स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ २५ ॥

अपरं च । मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।

---

पिपासा०—पातुमिच्छा पिपासा । पानेच्छा तया आकुलितः त्रस्तः । यमुनाकच्छम् यमुनायाः कच्छं तीरम् । अननुभूतपूर्वम्—पूर्वं अनुभूतं अनुभूतपूर्वं तन्न भवतीति । अस्मन्मतेन—आवयोर्मतानुसारेण । किमिति—आवयोः स्वामिकर्मणः निरूपणं कृत्वा को लाभः किं प्रयोजनं वा । सेवकै०—सेवकैः यत्कृतं तत्पश्य । किं तदित्याकांक्षायामाह—स्वातन्त्र्यमिति । सेवां कृत्वा धनार्जनं कर्तुमिच्छद्भिः स्वातन्त्र्यहानिरेव सम्पादिता न कोप्यन्योर्थः इति भावः । शीतेति—शीतं च वातश्च आतपश्च शीतवातातपं तस्मात् क्लेशाः- तान् । पराश्रिताः परान् आश्रिताः सेवकाः । तदंशेन शीतवातातपक्लेशांशेन । मेधावी--सारासारविचारणाकुशलः । शीतवातादिक्लेशाः सोढव्याश्चेद्वरं ते सोढा मोक्षप्रापकतपोर्थमिति मत्वा तपश्चरणेन श्रेयो लब्ध्वा सुखी भवतीति भावः । सेवायामङ्गीकृतायां तु सदैव क्लेशसहनमावश्यकं । तपश्चरणे च यावत्सिद्धि । इति तदंशत्वम् । अनायत्तवृत्तिता—आयत्ता पराधीना वृत्तिः यस्य स आयत्तवृत्तिः स न भवतीति अनायत्तवृत्तिः तस्य भावः तत्ता स्वतन्त्रवृत्तित्वम् । ते वै इत्यादि ते वै जीवन्ति चेत् के मृताः । ते मृतप्राया एव इत्यर्थः । ते वै के जीवन्ति के मृताः सर्वे मृता एव इति वा योजनीयम् । समाचर—स्वीकुरु । आशाग्रहग्रस्तैः—आशा एव ग्रहः उपरागादिः तेन ग्रस्तैः । पण्यस्त्रीभिः—गणिकाभिः । परोपकरणीकृतः—परेषां उपकरणतां सेवानुगुणतां नीतः । साधनीकृत इति वा । मौनान्मूर्ख इति सेवकः मौनं धारयति चेत् स मूर्खः इत्यभिधीयते । प्रवचनपटुर्वातुलः स्याच्चेद्

धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २६ ॥

विशेषतश्च । प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ २७ ॥

दमनको ब्रूते—मित्र सर्वथा मनसापि नैतत्कर्तव्यम् । यतः ।
कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ २८ ॥

अन्यच्च पश्य । कुतः सेवाविहीनानां चामरोद्धूतसंपदः ।
उद्दण्डधवलच्छत्रं वाजिवारणवाहिनी ॥ २९ ॥

करटको ब्रूते—तथापि किमनेनास्माकं व्यापारेण । यतोऽव्यापारेषु व्यापारः सर्वथा परिहरणीयः । पश्य ।
अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः ॥ ३० ॥

दमनकः पृच्छति—कथमेतत् । करटकः कथयति—

॥ कथा १ ॥

अस्ति मगधदेशे धर्मारण्यसंनिहितवसुधायां शुभदत्तनाम्ना कायस्थेन विहारः कर्तुमारब्धः । तत्र करपत्रदार्यमाणैकस्तम्भस्य कियद्दूरस्फाटितस्य काष्ठखण्डद्वय-मध्ये कीलकं निधाय सूत्रधारेण धृतम् । तत्र[1] बलवान्वानरयूथः क्रीडन्नागतः । एको वानरः कालप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः । तत्र तस्य मुष्कद्वयं लम्बमानं काष्ठखण्डद्वयाभ्यन्तरे प्रविष्टम् । अनन्तरं स च सहजचपलतया महता प्रयत्नेन तं कीलकमाकृष्टवान् । आकृष्टे च कीलके चूर्णिताण्डद्वयः पञ्चत्वं गतः । अतोऽहं ब्रवीमि—अव्यापारेषु व्यापारम् इत्यादि । दमनको ब्रूते-तथापि स्वामि-चेष्टानिरूपणं सेवकेनावश्यं करणीयम् । करटको ब्रूते--सर्वस्मिन्नधिकारे य एव नियुक्तः प्रधानमन्त्री स करोतु । यतोऽनुजीविना पराधिकारचर्चा सर्वथा न कर्तव्या । पश्य ।

पराधिकारचर्चां यः कुर्यात्स्वामिहितेच्छया ।
स विषीदति चीत्काराद्गर्दभस्ताडितो यथा ॥ ३१ ॥

दमनकः पृच्छति—कथमेतत् । करटको ब्रूते—

---

वातुलः वाताविष्टो वा जल्पकः वाचालो वेति गृह्यते । अभिजातः कुलीनः । अप्रगल्भः भीरुः । प्रणमति इ०—उन्नतिं उच्चैः पदमिच्छन्तः प्रणमन्ति सा प्रणतिरेव उच्चत्वविघा-तिनी । जीविकार्थे कदाचित्प्राणैरपि वियुज्यन्ते । सुखं लिप्सन्तः क्लेशभाजो भवन्तीत्यहो मौढ्यं सेवावृत्तीनामिति निष्कर्षः । परमेश्वराः नृपालाः । चामरोद्धूतसम्पदः चामराणि उद्धूतानि यासु तादृशः सम्पदः । उद्गतो दण्डो यस्य तादृशं धवलं छत्रं । वाजिनश्च वार-णाश्च यस्यां तादृशी वाहिनी चमूः । सेवकसमुदायो वा । कीलोत्पाटी—कीलं उत्पाटय-तीति । विहारः मठः देवतायतनं वा । करपत्र०—करपत्रेण क्रकचेन दार्यमाणश्चासौ एक-स्तम्भश्च तस्य । स्फाटितस्य—पाटितस्य कृत्तस्य । सूत्रधारेण—स्थपतिना त्वष्ट्रा । पञ्चत्वं गतः मृतः । पराधिकारचर्चा अन्याधिकारनिरूपणम् । अयं शब्दः ' अव्यापारेषु व्यापारः'

---

१ तत्र वनवासी. २ कालदण्ड.

## ॥ कथा १ ॥

अस्ति वाराणस्यां कर्पूरपटको नाम रजकः । स चैकदाभिनववयस्कया वध्वा सह चिरं केलिं कृत्वा निर्भरमालिङ्ग्य प्रसुप्तः । तदनन्तरं तद्गृहद्रव्याणि हर्तुं चौरः प्रविष्टः । तस्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति कुक्कुरश्चोपविष्टोऽस्ति । अथ गर्दभः श्वानमाह—सखे भवतस्तावदयं व्यापारः । तत्किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि । कुक्कुरो ब्रूते—भद्र मम नियोगस्य चर्चा त्वया न कर्तव्या । त्वमेव किं न जानासि यथा तस्याहर्निशं गृहरक्षां करोमि । यतोऽयं चिरान्निर्वृतो ममोपयोगं न जानाति । तेनाधुनापि ममाहारदाने मन्दादरः । यतो विना विधुरदर्शनं स्वामिन उपजीविषु मन्दादरा भवन्ति । गर्दभो ब्रूते—शृणु रे बर्बर ।

याचते कार्यकाले यः स किंभृत्यः स किंसुहृत् ।

कुक्कुरो ब्रूते—शृणु तावत् ।

भृत्यान्संभाषयेद्यस्तु कार्यकाले स किंप्रभुः ॥ ३२ ॥

यतः । आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने ।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥ ३३ ॥

ततो गर्दभः सकोपमाह—अरे दुष्टमते पापीयांस्त्वं यद्विपत्तौ स्वामिकार्योपेक्षां करोषि । भवतु तावत् । यथा स्वामी जागरिष्यति तन्मया कर्तव्यम् । यतः ।

पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन परलोकममायया ॥ ३४ ॥

इत्युक्त्वोच्चैश्चीत्कारशब्दं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राभङ्गकोपादुत्थाय गर्दभं लगुडेन ताडयामास । अतोऽहं ब्रवीमि-पराधिकारचर्चाम् इत्यादि । पश्य । पशूनामन्वेषणमेवास्मन्नियोगः । स्वनियोगचर्चा क्रियताम् । (विमृश्य ।) किं त्वद्य तया चर्चया न प्रयोजनम् । यत आवयोर्भक्षितशेषाहारः प्रचुरोऽस्ति । दमनकः सरोषमाह-कथमाहारार्थी भवान्केवलं राजानं सेवते । एतदयुक्तं तव । यतः ।

सुहृदामुपकारकारणाद् द्विषतामप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥ ३५ ॥
जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य आत्मार्थे को न जीवति ॥ ३६ ॥

अपि च । यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति ।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ३७ ॥

---

इत्यनेन समानार्थः । विषीदति विषादं खेदं प्राप्नोति । रजकः–निर्णेजकः । प्रसुप्तः–गाढनिद्रां गतः । नियोगस्य–अधिकारस्य । चर्चा–विचारणा । अहर्निशम्–अहनि च निशायां च अहर्निशं सदैव । विधुरदर्शनं–आपद्–संकट–दर्शनम् । बर्बर–नीच, दस्यो । कार्यकाले उपस्थिते कार्ये । स किं भृत्यः इति वा पदच्छेदः । स नैव भृत्य इत्यर्थः । एवं स किं सुहृद् स किं प्रभुरित्यत्र योज्यम् । भृतौ पोषणे । धर्मसेवने धर्माचरणे । प्रतिहस्तकः प्रतिनिधिः, प्रतिपुरुषः । एकस्य स्थाने अन्यः पुरुषः । पृष्ठतः इ०–सूर्यातपं पृष्ठे गृह्णीयात् । अमायया–अकपटाचरणेन वेदविहितमार्गानुसारेण । यद्वा ममत्वशून्यत्वेन, ऐहिकवस्तुषु आसक्तिं विहायेत्यर्थः । चीत्कारः–आरटनम् । खरनादः । उपकारकारणात्–सुहृदामुपरि

पश्य । पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः ।
कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ३८ ॥

अन्यच्च । मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् ।
प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ ३९ ॥

तथा चोक्तम् । वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४० ॥

तथा हि । स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ ४१ ॥

अपरं च । सेव्यसेवकयोरन्तरं पश्य ।
लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ४२ ॥

किं च । यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभज्यमानम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ४३ ॥

---

उपकारकरणसामर्थ्यं भवतीति हेतोः । पुराणैः—रजतनाणकविशेषैः । 'पुराणं षोडशपणम्' इति हैमः । चतसृभिः काकिणीभिः पणः भवति । षोडशभिः पणैः पुराणम् । वाजिवारण०—वाजी वाजिनः भिद्यते यथा भारवाही घोटकः सांयुगीनादश्ववरात् । वारणः हस्ती । लोह-शब्दोऽत्र धातुसामान्ये लोहो लोहाद्यथा कालायसमपि लोहः सुवर्णमपि लोहः । एवमन्यत्र । स्वल्पेति-स्नायुरङ्गसप्रत्यङ्गसन्धिबन्धनातन्तुविशेषः । वसा मेदः तयोरवशेषः तेन मलिनम् । निर्मांसं—मांसहीनम् । अस्थिकं अस्थिशकलम् । क्षुधाशान्तये क्षुधानिवृत्त्यर्थम् । अङ्कमागतं—उत्सङ्गप्राप्तम् । त्यक्त्वा तुच्छत्वबुद्ध्या इत्यर्थः । कृच्छ्रगतः आपद्गतः । सत्त्वानुरूपं—सत्त्वं स्वभावः बलं वा । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति मेदिनी । तस्य अनुरूपं सदृशम् । लाङ्गूलेति—श्वा कुकुरः पिण्डदस्य भक्ष्यं ददतः पुरुषस्य पुरतः लाङ्गूलचालनं पुच्छविधूननं कुरुते । गजपुङ्गवः गजश्रेष्ठः । पुङ्गवादिशब्दास्तत्पुरुषोत्तरपदे श्रेष्ठार्थवाचका भवन्ति । तदुक्तममरसिंहेन—'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥' इति । धीरं—गम्भीरं यथा तथेति क्रियाविशेषणम् । चाटुशतैः प्रियवाक्शतैः प्रार्थितः । क्षुद्रः श्ववृत्तिमाश्रित्य मुखचालनादिकं करोति सर्वैरवज्ञायते च । महाजनस्तु गाम्भीर्येण पश्यन्प्रियवचनश्लाघितः भुङ्क्ते सर्वैरादियते च इति भावः । यदिति—यद् जीवितं विज्ञानं विशिष्टं ज्ञानम् आन्वीक्षिक्यादीनामिति यावत् । च विक्रमः पराक्रमश्च यशः कीर्तिश्च तैः अभज्यमानमवियुक्तं अत एव प्रथितं विख्यातं सत् क्षणमपि जीव्यते । इह अस्मिन् जगति । तज्ज्ञाः एतद्रहस्यं जानन्तः पण्डिता इत्यर्थः । तन्नाम जीवितं प्रवदन्ति । [illegible] ऽभ्युपगमे वा । नाम कोपेऽभ्युपगमे विस्मये

अपरं च । यो नात्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च बन्धुवर्गे ।
किं तस्य जीवितफलेन मनुष्यलोके
काकोपि जीवति चिराय बलिं च भुङ्क्ते ॥ ४४ ॥

अपरमपि । अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ॥ ४५ ॥

करटको ब्रूते—आवां तावदप्रधानौ । तदाप्यावयोः किमनया विचारणया । दमनको ब्रूते—कियता कालेनामात्याः प्रधानतामप्रधानतां वा लभन्ते । यतः ।

न कस्यचित्कश्चिदिह स्वभावा-
द्भवत्युदारोऽभिमतः खलो वा
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्येव नरं नयन्ति ॥ ४६ ॥

किं च । आरोप्यते शिला शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४७ ॥
यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेव कर्मभिः ।
कूपस्य खनिता यद्वत्प्राकारस्येव कारकः ॥ ४८ ॥

तद्भद्र स्वयत्नायत्तो ह्यात्मा सर्वस्य । करटको ब्रूते—अथ भवान्किं ब्रवीति । स आह—अयं तावत्स्वामी पिङ्गलकः कुतोऽपि कारणात् सच्चकितः परिवृत्योपविष्टः । करटको ब्रूते—किं तत्त्वं जानासि । दमनको ब्रूते—किमत्राविदितमस्ति । उक्तं च ।

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति देशिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ ४९ ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारेण लक्ष्यतेऽन्तर्गतं मनः ॥ ५० ॥

---

स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते ॥' इति मेदिनी । किं तस्य जीवितफलेन—तस्य जीवितमफलमेव नास्तीति भावः । अहितेति—अहितं अनिष्टं हितं श्रेयस्करं तयोः विचारः विवेकः । निर्णय इति यावत् । तत्र शून्या तद्रहिता मतिर्यस्य । श्रुतिसमयैः श्रुतिप्रतिपादिताचारैः । 'समयाः शपथाचारकालसिद्धान्तसंविदः ।' इत्यमरः । तिरस्कृतस्य तद्रहितस्य इति यावत् । शास्त्रमार्गाद् भ्रष्टस्य । उदर०—उदरस्य भरणं एव उदरभरणमात्रं तदेव केवलं इच्छतीति तस्य । पुरुषपशोः पुरुषः पशुरिव तस्य । कियता इत्या०—कियान् किंप्रमाणकः स कालः येन अमात्याः अग्र्यं अवरं वा पदं प्राप्नुवन्ति । अचिरादेवेत्यर्थः । यः राजकार्यधुरंधरः स शीघ्रं मूर्धन्यं पदमारोहति यः न तथा स पराचीनं पदं लभते । तथाहि उच्चनीचपदलाभो गुणागुणनिबन्धनो न कालायत्त इति भावः । लोके इ०—अस्य समानार्थः श्लोकांशः—'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।' जातौ एकवचनम् । तत्त्वं परमार्थं याथात्म्यम् । उदीरित इति उदीरितः वाचा व्यक्तीकृतः । गृह्यते ज्ञायते । देशिताः आज्ञप्ताः । ऊहति तर्कयति अनुमिमीते । परेङ्गित०—परेषां इङ्गितस्य ज्ञानं एव फलं यासाम् । इङ्गितं हृद्गतः भावः । 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' । इति सज्जनः । आकारैः इ०—भ्रुकुटीमुखरागादिः आकारः । इङ्गितं अभिप्रायानुरूपा चेष्टा । म. स्मृ. अ० ८ श्लो. २६ ।

तदत्र भयप्रस्तावे प्रज्ञाबलेनाहमेनं स्वामिनमात्मीयं करिष्यामि । यतः ।

प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ५१ ॥

करटको ब्रूते—सखे त्वं सेवानभिज्ञः । पश्य ।

अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते ।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥ ५२ ॥

दमनको ब्रूते—भद्र कथमहं सेवानभिज्ञः । पश्य ।

किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम् ।
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥ ५३ ॥

यतः । यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ५४ ॥

अन्यच्च । कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च ।
आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥ ५५ ॥

अपरं च । अल्पेच्छुर्धृतिमान्प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेत स राजवसतौ वसेत् ॥ ५६ ॥

करटको ब्रूते—कदाचित्स्वामनवसरप्रवेशादवमन्यते स्वामी । सोऽब्रवीत्—अस्त्वेवम् । तथाप्यनुजीविना स्वामिसांनिध्यमवश्यं करणीयम् । यतः ।

दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् ।
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ५७ ॥

पश्य । आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंगतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च
यः पार्श्वतो वसति तं परिवेष्टयन्ति ॥ ५८ ॥

करटको ब्रूते—अथ तत्र गत्वा किं वक्ष्यति भवान् । स आह—शृणु । किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्यामि तावत् । करटको ब्रूते—किं तज्ज्ञानलक्षणम् । दमनको ब्रूते—शृणु ।

---

भयप्रस्तावे—प्रस्तावः अवसरः प्रसङ्गः । 'प्रस्तावः स्यादवसरः' इत्यमरः । प्रस्तावसदृशम्—अवसरोचितं, प्रस्तुतविषयानुरूपम् । सद्भावसदृशं—सन् शोभनः भावः अभिप्रायः तस्य अनुरूपम् । भावः स्वभावः अभिप्रायो वा । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।' इत्यमरमेदिन्यौ । अवितथाम्—सफलां कुर्यात् पालयेत् । विकल्पेत-संशय्य न कर्तव्याकर्तव्यं विचारयेत् । राजवसतौ नृपप्रासादे । दोषभीतेः—दोषः आनिष्टपरिणामः वैगुण्यं वा । भजते तस्मिन्स्निह्यति, तमनुगृह्णाति । तमकुलीनं—कुले जातः कुलस्यापत्यं वा कुलीनः न कुलीनः अकुलीनः दुष्कुलोत्पन्नः । असङ्गतम्—न प्रशस्तं सङ्गतं सङ्गतिर्यस्य सोऽसङ्गतः तं अयोग्यसमागमम् । अत्र नञोऽप्राशस्त्यमर्थः । तदुक्तं 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति । यद्वा नास्ति सम्यग् गतमस्य असावसङ्गतः दुराचारः तम् । प्रमदाः प्रकृष्टः मदः यासां ताः तरुण्यः । दूरात् सेवकं दूरस्थोपि । अनुरक्तः सानुरागः विरक्तो वा विरक्तः—निरनुराग

दूरादवेक्षणं हासः संप्रश्नेष्वादरो भृशम्।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥ ५९ ॥
असेवके चानुरक्तिर्दानं सप्रियभाषणम्।
सुरक्तेश्वरचिह्नानि दोषेऽपि गुणसंग्रहः ॥ ६० ॥

अन्यच्च। कालयापनमाशानां वर्धनं फलखण्डनम्।
विरक्तेश्वरचिह्नानि जानीयान्मतिमान्नरः ॥ ६१ ॥

एतज्ज्ञात्वा यथायं ममायत्तो भविष्यति तथा वक्ष्यामि। यतः।

अपायसंदर्शनजां विपत्तिमुपायसंदर्शनजां च सिद्धिम्।
मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥ ६२ ॥

करटको ब्रूते—तथाप्यप्राप्ते प्रस्तावे न वक्तुमर्हसि। यतः।

अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन्।
प्राप्नुयाद् बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥ ६३ ॥

दमनको ब्रूते— मित्र मा भैषीः। नाहमप्राप्तावसरं वचनं वदिष्यामि। यतः।

आपद्युन्मार्गगमने कार्यकालात्ययेषु च।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥ ६४ ॥

यदि च प्राप्तावसरोपि[3] मन्त्रो मया न वक्तव्यस्तदा मन्त्रित्वमेव ममानुपपन्नम्। यतः।

कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः।
स गुणस्तेन च गुणिना रक्ष्यः संवर्धनीयश्च ॥ ६५ ॥

तद्भद्र अनुजानीहि माम्। गच्छामि। करटको ब्रूते—शुभमस्तु। शिवास्ते पन्थानः। यथाभिलषितमनुष्ठीयताम् इति। ततो दमनको विस्मित इव पिङ्गलकसमीपं गतः। अथ दूरादेव सादरं राज्ञा प्रवेशितः साष्टाङ्गपातं प्रणिपत्योपविष्टः। राजाह–चिराद् दृष्टोऽसि। दमनको ब्रूते–यद्यपि मया सेवकेन श्रीमद्देवपादानां न किं चित्प्रयोजनमस्ति तथापि प्राप्तकालमनुजीविना सांनिध्यमवश्यं कर्तव्यमित्यागतोऽस्मि। किं च।

---

असंतुष्टः। संप्रश्नेषु—कुशलप्रश्नेषु। प्रियवस्तुषु इष्टपदार्थेषु। असेवके—सेवामकुर्वाणे। सुरक्तेश्वर०—सुरक्तस्य प्रकृष्टानुरागवतः ईश्वरस्य नृपस्य चिन्हानि लिङ्गानि। गुणसंग्रहः–गुणावेक्षणं०–ग्रहणं वा, कालयापनम्–अभिमतमनोरथपूरणे कालक्षेपः। फलखण्डनम्–फले विसंवादः आशाफलविनाशो वा। अपायेति–मेधाविनो नीतिविधिप्रयुक्तामित्यत्र अनीति० नीति०इति पदच्छेदः। मेधाविनः नीतिशास्त्रनिपुणाः अनीतिविधिप्रयुक्तां नीतिशास्त्राननुष्ठानजनितां अपायसंदर्शनजां अपायानां अनिष्टानां संदर्शनात् आविर्भावात् उत्पन्नां च विपत्तिं कार्यनाशं नीतिविधिप्रयुक्तां नयविधानेन जनितां उपायसम्यक्पर्यालोचनोत्थां च सिद्धिं अभिमतसफलतां प्रस्फुरन्तीं अग्रे प्रादुर्भवन्तीमिव दर्शयन्ति। याथातथ्यवर्णनेनेत्यर्थः। बुद्ध्यवज्ञानं बुद्धेरवमाननाम्। आपदि– आपत्काले उपस्थिते। उन्मार्गगमने–असत्पथानुसरणे। प्रभोरिति शेषः। कार्यकालात्ययेषु कार्यस्य कालास्तेषां अत्ययेषु अतिक्रमणेषु। उचितकाले प्रभुः कार्यं न कुर्याच्चेदित्यर्थः। अपृष्टेनापि०–इत्यत्र 'अपृष्टोपि हितान्वेषी कुर्यात्कल्याणभाषितम्।' इति कामन्दकोक्तः पाठः। दन्तस्य दन्तानाम्। जातौ एकवचनम्।

---

१ प्रीतिविवर्धनम्। २ अनुरक्तेशलिङ्गानि। इ० पा०। ३ प्राप्तावसरेणापि। इ० पा०। ४ यथाभिप्रेतम्। इ० पा०।

दन्तस्य निर्घर्षणकेन राजन्कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां किमङ्गवाक्पाणिमता नरेण ॥ ६६ ॥
यद्यपि चिरणावधीरितस्य दैवपादैर्मे बुद्धिनाशः शङ्क्यते तदपि न शङ्कनीयम् । यतः ।
मणिर्लुठति पादेषु काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥ ६७ ॥
अन्यच्च ।
कदर्थितस्यापि च धैर्यवृत्तेर्बुद्धेर्विनाशो न हि शङ्कनीयः ।
अधःकृतस्यापि तनूनपातो नाधः शिखा याति कदाचिदेव ॥ ६८ ॥
देव तत्सर्वथा विशेषज्ञेन स्वामिना भवितव्यम् । यतः ।
निर्विशेषो यदा राजा समं सर्वेषु वर्तते ।
तदोद्यमसमर्थानामुत्साहः परिहीयते ॥ ६९ ॥
किं च । त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेत्तथैवैतांस्त्रिविधेष्वेव कर्मसु ॥ ७० ॥
यतः । स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ७१ ॥
अपि च । कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते ।
न स विरौति न चापि न शोभते भवति योजयितुर्वचनीयता ॥ ७२ ॥
अन्यच्च । मुकुटे रोपितः काचश्चरणाभरणे मणिः ।
न हि दोषो मणेरस्ति किं तु साधोरविज्ञता ॥ ७३ ॥
पश्य । बुद्धिमाननुरक्तोऽयमयं शूर इतो भयम् ।
इति भृत्यविचारज्ञो भृत्यैरापूर्यते नृपः ॥ ७४ ॥
तथा हि । अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्य हि भवन्ति योग्या अयोग्याश्च ॥ ७५ ॥
अन्यच्च । किं भक्तेनासमर्थेन किं शक्तेनापकारिणा ।
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ ७६ ॥
यतः । अवज्ञानाद्राज्ञो भवति मतिहीनः परिजनः
ततस्तत्प्राधान्याद्भवति न समीपे बुधजनः ।

निर्घर्षणकेन–मार्जनविधायकेन । ईश्वराणां प्रभूणां कार्यं प्रयोजनं भवति । किमङ्ग किमु वक्तव्यं वाक्पाणिमता नरेण तद्भवेदिति । अङ्गवाक्पाणिमतेत्येकं वा पदम् । कदर्थितस्य–अवमानितस्य अतिदुःखितस्य वा । धैर्य०–धैर्येण धैर्ये वा वृत्तिरस्य । तनूनपातः अग्नेः । तनुं स्वशरीरं न पातयति तनूनपं घृतादि अत्तीति वा तनूनपात् । विशेषज्ञेन–विशेषं जानातीति तेन तारतम्यवता । सर्वेषु कार्यक्षमेषु कार्याक्षमेषु च इत्यर्थः । समं तुल्यम् । वर्तते व्यवहरति । नूपुरं–मञ्जीरः चरणाभरणविशेषः । कनकभूषणसंग्रहणोचितः–सुवर्णालंकारयोग। योग्यः । त्रपुणि सीसके, रङ्गे वा । 'रङ्गसीसकयोस्त्रपुः' इति रुद्रः । प्रणीधीयते योज्यते - विरौति–शब्दं कुरुते साधिक्षेपं क्रन्दति वा । वचनीयता–निन्दा । साधोः–अलंकारधारिणः । अविज्ञता–अविशेषज्ञता अविचक्षणता । मूर्खता इति यावत् । पुरुषविशेषम्–गुणग्राहिणमगुणग्राहिणं वा इत्यर्थः । अवज्ञानात् अनादरात् अवमानात् । परिजनः मतिहीनः मूढधीः भवति । चित्तस्य पर्याकुलत्वादिति भावः । यद्वा मतिहीनः परिजनः राज्ञः भवति । मन्दधियः एव राजसेवका भवन्ति । तत्प्राधान्यात् तेषां मूर्खाणां प्राधान्यात् प्राबल्यात् ।



१ यथैवास्तु तथैवास्तु इ० पा०, २ इहोभयमयं जडः; इहोभयगुणो जनः । इ० पा० ।

मुधैरस्यक्तं राज्यं न हि भवति नीतिर्गुणवती
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ७७ ॥
अपरं च । जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् ।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ७८ ॥
किं च । बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ ७९ ॥

पिङ्गलकोऽवदत्—भद्र दमनक किमेतत् । अस्मदीयप्रधानामात्यपुत्रस्त्वमियत्कालं यावत्कुतोऽपि खलवचनान्नागतोऽसि । इदानीं यथाभिमतं ब्रूहि । दमनको ब्रूते—देव पृच्छामि किंचित् । उच्यताम् । उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मित इव तिष्ठति । पिङ्गलकोऽवदत्—भद्रमुक्तं त्वया । किंत्वेतद्रहस्यं वक्तुं कश्चिद्विश्वासभूमिर्नास्ति । त्वं तु तद्विध इति कथयामि । शृणु । संप्रति वनमिदमपूर्वसत्त्वाधिष्ठितमतोऽस्माकं त्याज्यम् । अनेन हेतुना विस्मितोऽस्मि । तथा च श्रुतस्त्वयापि अपूर्वः शब्दो महान् । शब्दानुरूपेणास्य प्राणिनो महता बलेन भवितव्यम् । दमनको ब्रूते—देव अस्ति तावदयं महान्भयहेतुः । स शब्दोऽस्माभिरप्याकर्णितः । किं तु स किंमन्त्री यः प्रथमं भूमित्यागं पश्चाद्युद्धं चोपदिशति । अस्मिन्कार्यसंदेहे भृत्यानामुपयोग एव ज्ञातव्यः । यतः ।

बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः ।
आपन्निकषपाषाणे नरो जानाति सारताम् ॥ ८० ॥

सिंहो ब्रूते—भद्र महती शङ्का मां बाधते । दमनकः पुनराह । (स्वगतम्—)अन्यथा राज्यसुखं परित्यज्य स्थानान्तरं गन्तुं कथं मां संभाषसे । (प्रकाशं ब्रूते—)देव यावदहं जीवामि तावद्भयं न कर्तव्यम् । किं तु करटकादयोऽप्याश्वास्यन्तां यस्मादापत्प्रतीकारकाले दुर्लभः पुरुषसमवायः ।

ततस्तौ दमनककरटकौ राज्ञा सर्वस्वेनापि पूजितौ भयप्रतिकारं प्रतिज्ञाय चलितौ । करटको गच्छन्दमनकमाह—सखे किं शक्यप्रतीकारोऽयं भयहेतुरशक्यप्रतीकारो वेति न ज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो गृहीतः । यतोऽनुपकुर्वाणो न कस्याप्युपायनं गृह्णीयाद्विशेषतो राज्ञः । पश्य ।

यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ८१ ॥
तथा हि । बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८२ ॥

---

समीपे न भवति अवमानशङ्कयेति भावः । गुणवती फलदायिनी । 'संधिर्नो विग्रहो यानमासनं द्वैधमाश्रयः ।' एते षण्नीतिगुणाः । ईदृग्गुणवती नीतिः न फलति । अवशं–अशरणं निरवलम्बम् । सीदति ध्वस्तं विपद्ग्रस्तं वा भवति ; नृपार्चितम्–राज्ञा दानमानादिना पूजितम् । खलवचनात् तद्वचःप्रत्ययादित्यर्थः । विस्मितः सचकितः भयाकुल इति यावत् । विश्वासभूमिः विश्वासभाजनम् । यः रहस्यं रक्षेदिति शेषः । अपूर्वसत्त्वाधिष्ठितम्–अपूर्वेण अदृष्टपूर्वेण प्राणिनाश्रितम् । कार्यसंदेहे कर्तव्यानिश्चये । बन्धुस्त्रीभृत्यवर्गस्य आत्मनश्च बुद्धेः सत्त्वस्य बलस्य च सारताम् । स्थानान्तरं गन्तुम्–अस्माभिरेतद्वनं त्यक्त्वान्यत्र गन्तव्यमिति । आश्वास्यन्ताम्–आशाप्रदानेन तेषां प्रोत्साहनं क्रियतामित्यर्थः । पुरुषसमवायः पुरुषसमूहः । शक्यप्रतीकारः–शक्यः साध्यः प्रतीकारः प्रतिविधानं निराकरणं । भयोपशमं–भीतिशान्तिम् । अनुपकुर्वाणः–उपकारमकुर्वन् । उपकारकरणात्प्रागिति यावत् ।

दमनको विहस्याह—मित्र तूष्णीमास्यताम् । ज्ञातं मया भयकारणम् । बलीवर्दनर्दितं तत् । वृषभाश्चास्माकमपि भक्ष्याः । किं पुनः सिंहस्य । करटको ब्रूते—यद्येवं तदा स्वामित्रासस्तत्रैव किं नापनीतः । दमनको ब्रूते—यदि स्वामित्रासस्तत्रैव मुच्यते तदा कथमयं महाप्रसादलाभः स्यात् । अपरं च ।

निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत् ॥ ८३ ॥

करटकः पृच्छति—कथमेतत् । दमनकः कथयति—

॥ कथा ३ ॥

अस्त्युत्तरापथेऽर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंहः । अस्य पर्वतकन्दरमधिशयानस्य केसराग्रं कश्चिन्मूषिकः प्रत्यहं छिनत्ति । ततः केसराग्रं लूनं दृष्ट्वा कुपितो विवरान्तर्गतं मूषिकमलभमानोऽचिन्तयत्—

क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्नैव लभ्यते ।
तमाहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥ ८४ ॥

इत्यालोच्य तेन ग्रामं गत्वा विश्वासं कृत्वा दधिकर्णनामा बिडालो यत्नेनानीय मांसाहारं दत्त्वा स्वकन्दरे स्थापितः । अनन्तरं तद्भयान्मूषिकोऽपि बिलान्न निःसरति । तेनासौ सिंहोऽक्षतकेसरः सुखं स्वपिति । मूषिकशब्दं यदा यदा शृणोति तदा तदा सविशेषं मांसाहारदानेन तं बिडालं संवर्धयति । अथैकदा स मूषिकः क्षुधापीडितो बहिः संचरन्बिडालेन प्राप्तो व्यापादितश्च । अनन्तरं स सिंहो यदा कदाचिदपि तस्य मूषिकस्य शब्दं विवरान्न शुश्राव तदोपयोगाभावाद्बिडालस्याप्याहारदाने मन्दादरो बभूव । ततोऽसावाहारविरहाद्दुर्बलो दधिकर्णोऽवसन्नो बभूव । अतोऽहं ब्रवीमि—निरपेक्षो न कर्तव्यः इत्यादि ।

ततो दमनककरटकौ संजीवकसमीपं गतौ । तत्र करटकस्तरुतले साटोपमुपविष्टः । दमनकः संजीवकसमीपं गत्वाऽब्रवीत्—अरे वृषभ एष राज्ञा पिङ्गलकेनारण्यरक्षार्थं नियुक्तः सेनापतिः करटकः समाज्ञापयति–सत्वरमागच्छ । नो चेदस्मादरण्याद्दूरमपसर । अन्यथा ते विरुद्धं फलं भविष्यति । न जाने क्रुद्धः स्वामी किं विधास्यति[1] ।

ततो देशव्यवहारानभिज्ञः संजीवकः सभयमुपसृत्य साष्टाङ्गपातं करटकं प्रणतवान् । तथा चोक्तम्—

मतिरेव बलाद् गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ८५ ॥

अथ संजीवकः साशङ्कमाह–सेनापते किं मया कर्तव्यं तदभिधीयताम् । करटको ब्रूते–यद्यत्र कानने स्थित्याशास्ति तर्हि गत्वाऽस्मद्देवपादारविन्दं प्रणम ।

---

सर्वतेजोमयः–सर्वतेजःसमष्टिघटित इत्यर्थः । निरपेक्षः स्वसेवानिरपेक्षः । पर्वतकन्दरमधिशयानस्य–' अधिशीङ्स्थासां कर्म ' इति द्वितीया । केसराग्रं छटाग्रम् । अक्षतकेसरः अक्षतः अलूनः केसरो यस्य । सविशेषं—समधिकम् । अवसन्नो बभूव मृतः । विरुद्धमनिष्टम् । करिणामियं दशा—दृश्यमाना दशा । सत्यामपि शक्तौ मनुष्याधीनता इत्यर्थः । हस्तिपकः-

---

१ तच्छ्रुत्वा संजीवकश्चायात् ।

आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणे नामनादरः ।

पृथक्शय्या च नारीणामशस्त्रविहितो वधः ॥ १ ॥ इत्यधिकं केषुचित्पुस्तकेषु ।

संजीवको ब्रूते-तदभयवाचं मे यच्छ । गच्छामि । तदा स्वकीयदक्षिणबाहुं ददातु भवान् । करटको ब्रूते—शृणु रे बलीवर्द अलमनया शङ्कया । यतः ।

प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुंकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ॥ ८६ ॥

अन्यच्च ।

तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून्प्रबाधते महान्महत्येव करोति विक्रमम् ॥ ८७ ॥

ततस्तौ संजीवकं कियद्दूरे संस्थाप्य पिङ्गलकसमीपं गतौ । ततो राज्ञा सादरमवलोकितौ प्रणम्योपविष्टौ । राजाह--त्वया स दृष्टः । दमनको ब्रूते-देव दृष्टः । किंतु यद्देवेन ज्ञातं तत्तथा । महानेवासौ देवं द्रष्टुमिच्छति । किंतु महाबलोऽसौ । ततः सज्जीभूयोपविश्य दृश्यताम्[1] । शब्दमात्रादेव न भेतव्यम् । तथा चोक्तम्--

शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम् ।
शब्दहेतुं परिज्ञाय कुट्टनी गौरवं गता ॥ ८८ ॥

राजाह--कथमेतत् । दमनकः कथयति--

## ॥ कथा ४ ॥

अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम् । तच्छिखरप्रदेशे घण्टाकर्णो नाम राक्षसः प्रतिवसतीति जनप्रवादः श्रूयते । एकदा घण्टामादाय पलायमानः कश्चिच्चौरो व्याघ्रेण व्यापादितः खादितश्च । तत्पाणिपतिता घण्टा वानरैः प्राप्ता । ते च वानरास्तां घण्टामनुक्षणं वादयन्ति । ततो नगरजनैः स मनुष्यः खादितो दृष्टः । प्रतिक्षणं घण्टारवश्च श्रूयते । अनन्तरं घण्टाकर्णः कुपितो मनुष्यान्खादति घण्टां च वादयतीत्युक्त्वा सर्वे जना नगरात्पलायिताः । ततः करालया नाम कुट्टन्या विमृश्यानवसरोऽयं घण्टावादः तत्किं मर्कटा घण्टां वादयन्तीति स्वयं विज्ञाय राजा विज्ञापितः--देव यदि कियद्धनोपक्षयः क्रियते तदाहमेनं घण्टाकर्णं साधयामि । ततो राज्ञा तस्यै धनं दत्तम् । कुट्टन्या च मण्डलं[2] कृत्वा तत्र गणेशादिपूजागौरवं दर्शयित्वा स्वयं वानरप्रियफलान्यादाय वनं प्रविश्य फलान्याकीर्णानि । ततो घण्टां परित्यज्य वानराः फलासक्ता बभूवुः । कुट्टनी च घण्टां गृहीत्वा नगरमागता सर्वजनपूज्याभवत् । अतोऽहं ब्रवीमि—शब्दमात्रान्न भेतव्यम् इत्यादि ॥ ततः संजीवक आनीय दर्शनं कारितः । पश्चात्तत्रैव परमप्रीत्या निवसति ।

---

हस्त्यारोहः । करिणः करिपृष्ठस्थः इति यावत् । डिण्डिमो वाद्यभेदः । शपमानाय—कटूक्तीः प्रयुञ्जते । चेदिभूभुजे शिशुपालाय । गोमायुरुतानि–शृगालरवान् । सज्जीभूय—क्रमं बद्ध्वा । तदाक्रमणे स्वसंरक्षणार्थमिति सूच्योर्थः । विमृश्येति–अयं घण्टावादः अनवसरः न तु नियतवेलाभवः । तस्मात्किं मर्कटा घण्टाया वादकाः स्युरिति विचार्य तत्स्वयं च परिज्ञाय इत्यर्थः । साधयामि स्ववशं नेष्यामि हनिष्यामि वा । मण्डलम्—अभिचारसाधकं चक्रं मान्त्रिकप्रसिद्धम् । गणेशादि०—गणपतिशाकिनीडाकिनीक्षेत्रपालप्रभृतिपूजाडम्बरम् ।

---

१ इत्यतः परं—
अम्भसा भिद्यते सेतुस्तथा मन्त्रोप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो वाग्भिर्भिद्येत कातरः ॥ १ ॥ इत्यधिकः श्लोकः केषुचित्पुस्तकेषु ।

२ मण्डलपूजा [illegible]

अथ कदाचित्तस्य सिंहस्य भ्राता स्तब्धकर्णनामा सिंहः समागतः। तस्यातिथ्यं कृत्वा समुपवेश्य पिङ्गलकस्तदाहाराय पशुं हन्तुं चलितः। अत्रान्तरे संजीवको वदति—देव अद्य हतमृगाणां मांसानि क्व। राजाह—दमनककरटकौ जानीतः। संजीवको ब्रूते—ज्ञायतां किमस्ति नास्ति वा। सिंहो विमृश्याह—नास्त्येव तत्। संजीवको ब्रूते—कथमेतावन्मांसं ताभ्यां खादितम्। राजाह—खादितं व्ययितमवधीरितं च। प्रत्यहमेष क्रमः। संजीवको ब्रूते—कथं श्रीमद्देवपादानामगोचरेणैषं क्रियते। राजाह-मदीयागोचरेणैव क्रियते। अथ संजीवको ब्रूते—नैतदुचितम्। तथा चोक्तम्।

नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम्।
कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः॥ ८९॥

अन्यच्च। कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः।
नृपते किंक्षणो मूर्खो दरिद्रः किंवराटकः॥ ९०॥

स ह्यमात्यः सदा श्रेयान्काकिनीं यः प्रवर्धयेत्।
कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः॥ ९१॥

किं चान्यैर्न कुलाचारैः सेव्यतामेति पूरुषः।
धनहीनः स्वपत्न्यापि त्यज्यते किं पुनः परैः॥ ९२॥

एतच्च राज्ये प्रधानं दूषणम्।

अतिव्ययोऽनवेक्षा च तथार्जनमधर्मतः।
मोषणं दूरसंस्थानं कोषव्यसनमुच्यते॥ ९३॥

यतः। क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया।
परिक्षीयत एवासौ धनी वैश्रवणोपमः॥ ९४॥

---

व्ययितम्—अन्येभ्यो दत्तम्। अवधीरितम्—अनवेक्षणेन अपध्वस्तम्। अगोचरेण—अनिवेद्य। अनुज्ञामलब्ध्वा इति यावत्। आपत्प्रतीकारं विपदां निवारणं विहाय अन्यत्र। कमण्डलूपमः—कमण्डलुः उपमा यस्य। कमण्डलुर्यथा बहूदकमन्तर्गृह्णाति अल्पं च बहिर्यच्छत्येवं कोषव्यवस्थायाममात्यः स्यादित्यर्थः। किंक्षण०—क्षणस्य किं महत्त्वमिति वदतीति किंक्षणः। यः क्षणस्यापि बहुमूल्यतां न जानाति स वृथाकालक्षेपात् अज्ञ एव तिष्ठति इति भावः। एवं किंवराटकः। यः वराटकस्यापि बहुमूल्यतां न जानाति स द्रव्यापव्ययादकिंचनतामेति। काकिनी—वराटकानां विंशतिः। 'वराटकानां दशकद्वयं यत्सा काकिनी ताश्च पणश्चतस्रः।' इति लीलावती। कोषवतः भूपतेः कोषः एव प्राणाः, प्राणाः न प्राणाः। 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः।' इति पञ्च प्राणाः। अत एव अयं शब्दः नित्यं बहुवचनः। एषां स्थानानि—'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥' अन्यैः—अन्यैः धनव्यतिरिक्तैः। कुलाचारैः कुलधर्मैः पुरुषः सेव्यतां नैति। नरः धनैरेव सेव्यते इत्यर्थः। अनवेक्षा—राजकार्याणामनवेक्षणम्। मोषणम्—अपहारः। दूरसंस्थानं—दूरे स्थितिः नृपस्य स्वराज्याद्वा शासनीयसंस्थानां वा। क्षिप्रं व्ययमानः—क्षिप्रं शीघ्रं अविचारितं धनव्ययं कुर्वन्। परिक्षीयते इत्यत्र श्रमणायते इति क्वचित्पाठः। श्रमणः भिक्षुकः तद्वदाचरति दरिद्रः भवति इति तस्यार्थः। वैश्रवणोपमः कुबेरतुल्यः।

---

१ तस्यायत्ना सदा श्रेयो यः काकिन्यपि वर्धयेत् इ० पा०।

स्तब्धकर्णो ब्रूते--शृणु भ्रातः चिराश्रितावेतौ दमनककरटकौ संधिविग्रहकार्याधिकारिणौ च कदाचिदर्थाधिकारे न नियोक्तव्यौ । अपरं च नियोगप्रस्तावे यत्किंचिन्मया श्रुतं तत्कथ्यते ।

ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते ।
ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ ९५ ॥
नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम् ।
सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ ९६ ॥
अपराधेऽपि निःशङ्को नियोगी चिरसेवकः ।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ ९७ ॥
उपकर्ताधिकारस्थः स्वापराधं न मन्यते ।
उपकारं ध्वजीकृत्य सर्वमेव विलुम्पति ॥ ९८ ॥
सपांशुक्रीडितोऽमात्यः स्वयं राजायते यतः ।
अवज्ञा क्रियते तेन सदा परिचयाद् ध्रुवम् ॥ ९९ ॥
अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल ।
शकुनिः शकटारश्च दृष्टान्तावत्र भूपते ॥ १०० ॥
सदायत्यामसाध्यः स्यात्समृद्धः सर्व एव हि ।
सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ १०१ ॥
प्राप्तार्थाग्रहणं द्रव्यपरीवर्तोऽनुरोधनम् ।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ १०२ ॥
नियोग्यर्थग्रहोपायो राज्ञां नित्यपरीक्षणम् ।
प्रतिपत्तिप्रदानं च तथा कर्मविपर्ययः ॥ १०३ ॥

---

अर्थाधिकारे कोषाध्यक्षतायाम् । नियोगप्रस्तावे–अधिकारप्रदानविषये । बन्धुः पितृव्यपुत्रादिः । सिद्धं—निष्पन्नम् । कृच्छ्रेण कष्टेन । खड्गं दर्शयते–उग्रतां प्रदर्शयति । युद्धायापि निश्चितमतिः सहसा द्रव्यं न ददाति इत्यर्थः । बन्धुः ज्ञातिभावतः एककुलजत्वादात्मनोपि सर्वस्मिन्स्वाम्यं मन्यमानः इति भावः । निःशंकः–चिरपरिचितत्वादिति भावः । निरवग्रहः निरङ्कुशः निरर्गलः । स्वच्छन्दानुवर्ती इति यावत् । ध्वजीकृत्य पुरस्कृत्य । विलुम्पति–ग्रसते, अपहरति । सपांशुक्रीडितः समानायां पांशौ कृतक्रीडः बाल्यादेव परिचित इत्यर्थः । उपांशुक्रीडितः इति पाठे रहसि क्रीडासहायः । वयस्यभावापन्न इत्यर्थः । अन्तर्दुष्टः–अभ्यन्तरे पापाशयः दुर्बुद्धिः । क्षमायुक्तः–बहिः क्षमाशीलः । किल प्रसिद्धौ । एतादृशअमात्यः त्याज्यः इति शेषः । शकुनिः–सौबलः दुर्योधनस्य मातुलः । शकटारः–नन्दराजसचिवः । पश्चाच्चाणक्येन सह कृतैककार्यः । आयत्याम्–उत्तरकाले । असाध्यः अनिवार्यप्रसरः । ऋद्धिः–धनसंपत्तिः । प्राप्तार्थाग्रहणम्–प्राप्तस्य उपस्थितस्य अर्थस्य राजद्रव्यस्य अग्रहणं अनादानम् । प्राप्तार्थग्रहणमितिपाठे उत्कोचग्रहणमित्यर्थः । द्रव्यपरीवर्तः–राजद्रव्यविनिमयः । अनुरोधनम्–स्वजनानामनुवर्तनं इष्टार्थसंपादनमिति यावत् । राजच्छन्दानुवर्तनं वा । उपेक्षा औदास्यम् । भोगः–विषयभोगे अभिनिवेशः । नृपद्रव्यस्योपभोगो वा । नियोग्यर्थ०–नियोगिनां कार्याधिकृतानामर्थस्य अन्यायेनोपार्जितद्रव्यस्य ग्रहोपायः ग्रहणोपायचिन्तनम् । तथा च मनुः–'ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः । तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥' इति । नित्यपरीक्षणम्–नियोगिनः अप्रमत्ताः स्वं स्वं

नापीडिता वमन्त्युच्चैरन्तःसारं महीपतेः ।
दुष्टव्रणा इव प्रायो भवन्ति हि नियोगिनः ॥ १०४ ॥
मुहुर्नियोगिनो बाध्या वसुधारा महीपतेः ।
सकृत्किं पीडितं स्नानवस्त्रं मुञ्चेद्द्रुतमुदकम् ॥ १०५ ॥

एतत्सर्वं यथावसरं ज्ञात्वा व्यवहर्तव्यम् । पिङ्गलको ब्रूते–अस्ति तावदेवम् । किंत्वेतौ सर्वथा न मम वचनकरौ । स्तब्धकर्णो ब्रूते–एतत्सर्वथानुचितम् । यतः ।

आज्ञाभङ्गकरान्राजा न क्षमेत सुतानपि ।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य च ॥ १०६ ॥

अन्यच्च । स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ १०७ ॥

विशेषतश्च । तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् ।
नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ १०८ ॥

भ्रातः सर्वथास्मद्वचनं क्रियताम् । व्यवहारोऽप्यस्माभिः कृत एव । अयं संजीवकः सस्यभक्षकोऽर्थाधिकारे नियुज्यताम् । एतद्वचनात्तथानुष्ठिते सति तदारभ्य पिङ्गलकसंजीवकयोः सर्वबन्धुपरित्यागेन महता स्नेहेन कालोऽतिवर्तते । ततोऽनुजीविनामप्याहारदाने शैथिल्यदर्शनाद्दमनककरटकावन्योन्यं चिन्तयतः । तदाह दमनकः करटकम्–मित्र किं कर्तव्यम् । आत्मकृतोऽयं दोषः । स्वयं कृतेऽपि दोषे परिदेवनमप्यनुचितम् । तथा चोक्तम्––

स्वर्णरेखामहं स्पृष्ट्वा बद्ध्वात्मानं च दूतिका ।
आदित्सुश्च मणिं साधुः स्वदोषाद्दुःखिता इमे ॥ १०९ ॥

करटको ब्रूते–कथमेतत् । दमनकः कथयति ।

## ॥ कथा ५ ॥

**अस्ति काञ्चनपुरनाम्नि नगरे वीरविक्रमो नाम राजा । तस्य धर्माधिकारिणा कश्चिन्नापितो वध्यभूमिं नीयमानः कंदर्पकेतुनाम्ना परिव्राजकेन साधुद्वितीयेन नायं हन्तव्य इत्युक्त्वा वस्त्राञ्चले धृतः । राजपुरुषा ऊचुः—किमिति नायं वध्यः । स आह—श्रूयताम् । स्वर्णरेखामहं स्पृष्ट्वा इत्यादि पठति । त आहुः—कथमेतत्**

---

नियोगमनुतिष्ठन्तीति वा नेति परीक्षणम् । प्रतिपत्तिप्रदानम्–ये आत्मनः कार्यं साधु निर्वाहयन्ति तेभ्य उन्नतपददानम् । कर्मविपर्ययः–नियोगपरिवर्तनम् । राज्ञां उचितं कर्म इतिशेषः । महीपतेः नियोगिनः अपीडिताः अक्लेशिताः सन्तः उच्चैः अन्तःसारं निगीर्णं महान्तमर्थं न वमन्ति उद्गिरन्ति । दुष्टव्रणाः तेपि अपीडिता अमर्दिताः अन्तःसारं पूयादिकं न निष्कासयन्ति । वसुधाराः—वसूनां धाराः सन्ति एषां छद्मापहतमहाधनाः नियोगिनः महीपतेः बाध्या महीपतिना पीडनीयाः । निगीर्णद्रव्योद्गिरणार्थमिति शेषः । बाध्या इत्यत्र रोध इति पाठे नियोगिनः रोधः वसुनः द्रव्यस्य धारा प्रवाह इति योजनीयम् । चित्रगतस्य–आलेख्ये निवेशितस्य चित्रपटे लिखितस्य । अर्थपरस्य—धनार्जनैकरसस्य, धनलोलुपस्य । स हि धर्माधर्मौ न गणयतीति सुप्रसिद्धम् । प्रमत्तसचिवस्य–प्रमत्ताः स्वकर्तव्यस्योपेक्षाकारिणः सचिवाः यस्य । नियुक्तेभ्यः अधिकारिभ्यः । अन्यथा ते बलात्परस्वापहरणं कुर्युः । आदित्सुः ग्रहीतुमिच्छुः । धर्माधिकारिणा–धर्माधिकारे नियुक्तेन । वस्त्राञ्चले–वसन-

परिव्राजकः कथयति—अहं सिंहलद्वीपे भूपतेर्जीमूतकेतोः पुत्रः कंदर्पकेतुर्नाम। एकदा केलिकाननावस्थितेन मया पोतवणिङ्मुखाच्छ्रुतं यदत्र समुद्रमध्ये चतुर्दश्यामाविर्भूतकल्पतरुतले मणिकिरणावलीकर्बुरपर्यङ्के स्थिता सर्वालंकारभूषिता लक्ष्मीरिव वीणां वादयन्ती कन्या काचिद् दृश्यत इति। ततोऽहं पोतवणिजमादाय पोतमारुह्य तत्र गतः। अनन्तरं तत्र गत्वा पर्यङ्केऽर्धमग्ना तथैव सावलोकिता। ततस्तल्लावण्यगुणाकृष्टेन मयापि तत्पश्चाज्झम्पो दत्तः। तदनन्तरं कनकपत्तनं प्राप्य सुवर्णप्रासादे तथैव पर्यङ्के स्थिता विद्याधरीभिरुपास्यमाना मयालोकिता। तयाप्यहं दूरादेव दृष्ट्वा सखीं प्रस्थाप्य सादरं संभाषितः। तत्सख्या च मया पृष्टया समाख्यातम्—एषा कंदर्पकेलिनाम्नो विद्याधरचक्रवर्तिनः पुत्री रत्नमञ्जरी नाम। अनया च प्रतिज्ञातम्—यः कनकपत्तनं स्वचक्षुषागत्य पश्यति स एव पितुरगोचरेऽपि मां परिणेष्यतीति[1]। एषोऽस्या मनसः संकल्पः। तदेनां गान्धर्वविवाहेन परिणयतु भवान्। अथ तत्र वृत्ते गान्धर्वविवाहे तया सह रममाणस्तत्राहं तिष्ठामि। तत एकदा रहसि तयोक्तम्—स्वामिन् स्वेच्छया सर्वमिदमुपभोक्तव्यम्। एषा चित्रगता स्वर्णरेखा नाम विद्याधरी न कदाचित्स्प्रष्टव्या। पश्चादुपजातकौतुकेन मया सा स्वर्णरेखा स्वहस्तेन स्पृष्टा। तया चित्रगतयाप्यहं चरणपद्मेन ताडित आगत्य स्वराष्ट्रे पतितः। अथ दुःखार्तोऽहं परिव्रजितः पृथिवीं परिभ्राम्यन्निमां नगरीमनुप्राप्तः। अत्र चातिक्रान्ते दिवसे गोपगृहे सुप्तः सन्नपश्यम्। प्रदोषसमये सुहृदापानकात् स्वगेहमागतो गोपः स्ववधूं दूत्या सह किमपि मन्त्रयन्तीमपश्यत्। ततस्तां गोपीं ताडयित्वा स्तम्भे बद्ध्वा सुप्तः। ततोऽर्धरात्र एतस्य नापितस्य वधूर्दूती पुनस्तां गोपीमुपेत्यावदत्—तव विरहानलदग्धोऽसौ स्मरशरजर्जरितो मुमूर्षुरिव वर्तते महानुभावः। तस्य तादृशीमवस्थामवलोक्य परिक्लिष्टमनास्त्वामनुवर्तितुमागता। तदहमत्रात्मानं बद्ध्वा तिष्ठामि। त्वं तत्र गत्वा तं संतोष्य[3] सत्वरमागमिष्यसि। तथानुष्ठिते सति स गोपः प्रबुद्धोऽवदत्। इदानीं जारान्तिकं कथं न यासि। ततो यदासौ न किंचिदपि ब्रूते तदा दर्पान्मम वचसि प्रत्युत्तरमपि न ददासि इत्युक्त्वा कोपेन तेन कर्त्रिकामादायास्या नासिका छिन्ना। तथा कृत्वा पुनः सुप्तो गोपो निद्रामुपगतः। अथागता सा गोपी दूतीमपृच्छत्—का वार्ता। दूत्योक्तम्—पश्य मम

---

प्रान्ते। केलिकाननम्—क्रीडोद्यानम्। पोतवणिङ्मुखान्नौकाद्वारा वाणिज्यं कुर्वतो वणिजः। मणिकिरण०—मणीनां रत्नानां किरणावल्या मयूखसंतत्या कर्बुरः विचित्रवर्णः यः पर्यङ्कः मञ्चः तस्मिन्। अर्धमग्ना—अर्थात् जले। तथैव वर्णितानुरूपैव। तल्लावण्य०—तस्या लावण्यं सौन्दर्यं तदेव गुणः रज्जुः तेन। यद्वा लावण्यस्य गुणास्तैः आकृष्टः तेन। झम्पः प्लवः। अहमपि सागर आत्मानमपातयम्। उपास्यमाना सेव्यमाना। विद्याधरचक्रवर्तिनः विद्याधरसार्वभौमस्य। पितुरगोचरेपि पितुरनुज्ञामन्तरेणापि। परिव्रजितः—प्रव्रज्यां गृहीतवान्। आपानकं सुरापानस्थानम्। विरहानलदग्धः वियोगाग्निना संतप्तः। स्मरशरजर्जरितः स्मरः कामः तस्य शरैः व्याकुलितः। परिक्लिष्टमनाः परिक्लिष्टं व्यथितं मनः यस्य। सा। अनुवर्तितुमानुकूल्यमाचरितुम्। जारान्तिकं कथं न यासि—इति सोपालम्भं वचः।

---

१ अभिनवयौवनाभिः इत्यधिकं केषुचित्पुस्तकेषु। २ तथा चोक्तम्—रजनीचरनाथेन खण्डिते तिमिरे निशि। यूनां मनांसि विव्याध दृष्ट्वा दृष्ट्वा मनोभवः॥ इत्यधिकमेकस्मिन्मुद्रितपुस्तके। ३ संतोष्य इ० पा०।

मुखमेव वार्तां कथयति । अनन्तरं सा गोपी तथैवात्मानं बद्ध्वावस्थिता । इयं च दूती तां छिन्ननासिकां गृहीत्वा स्वगृहं प्रविश्य स्थिता । ततः प्रातरेवानेन नापितेन क्षुरभाण्डं याचिता सतीयं क्षुरमेकं प्रादात् । ततोऽसमग्रभाण्डे प्राप्ते समुपजातकोपोऽयं नापितस्तं क्षुरं दूरादेव गृहे क्षिप्तवान् । अथ कृतार्तनादेयं विनापराधेन मे नासिकानेन छिन्नेत्युक्त्वा धर्माधिकारिसमीपमेनमानीतवती । सा च गोपी तेन गोपेन पुनः पृष्टोवाच—अरे पाप को मां महासतीं विरूपयितुं समर्थः । मम व्यवहारमकल्मषमष्टौ लोकपाला एव जानन्ति । यतः ।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ११० ॥

ततोऽहं यदि परमसती स्यां निजस्वामिनं त्वां विहाय नान्यं मनसापि चिन्तयामि तदा मम मुखमक्षतं भवतु । पश्य मन्मुखम् । ततो यावदसौ गोपो दीपं प्रज्वाल्य तन्मुखमवलोकते तावदुन्नसं मुखमवलोक्य तच्चरणयोः पतितः—धन्योऽहं यस्येदृशी भार्या परमसाध्वी इति । योऽयमास्ते साधुरेतद्वृत्तान्तमपि शृणुत । अयं स्वगृहान्निर्गतो द्वादशवर्षैर्मलयोपकण्ठादिमां नगरीमनुप्राप्तः । अत्र च वेश्यागृहे सुप्तः । तस्याः कुट्टन्या गृहद्वारि स्थापितकाष्ठघटितवेतालस्य मूर्धनि रत्नमेकमुत्कृष्टमास्ते । तद् दृष्ट्वार्थलुब्धेनानेन साधुना रात्रावुत्थाय रत्नं ग्रहीतुं यत्नः कृतः । तदा तेन वेतालेन सूत्रसंचारितबाहुभ्यां पीडितः सन्नार्तनादमयं चकार । पश्चादुत्थाय कुट्टन्योक्तम्—पुत्र मलयोपकण्ठादागतोऽसि । तत्सर्वरत्नानि प्रयच्छास्मै । नो चेदनेन न त्यक्तव्योऽसि । इत्थमेवायं चेटकः । ततोऽनेन सर्वरत्नानि समर्पितानि । अधुना चायमपि हृतसर्वस्वोऽस्मासु मिलितः । एतत्सर्वं श्रुत्वा राजपुरुषैर्न्याये धर्माधिकारी प्रवर्तितः । नापितवधूर्मुण्डिता गोपी निःसारिता कुट्टनी च दण्डिता । साधोर्धनानि प्रदत्तानि । नापितश्च गृहं गतः । अतोऽहं ब्रवीमि—स्वर्णरेखामहं स्पृष्ट्वा इत्यादि ॥ अथ स्वयंकृतोऽयं दोषः । अत्र विलपनं नोचितम् । ( क्षणं विमृश्य । ) मित्र सहसैव यथानयोः सौहार्दं मया कारितं तथा मित्रभेदोऽपि मया कार्यः । यतः ।

अतथ्यान्यपि तथ्यानि दर्शयन्ति हि पेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ १११ ॥

अपरं च । उत्पन्नेष्वपि कार्येषु मतिर्यस्य न हीयते ।
स निस्तरति दुर्गाणि गोपी जारद्वयं यथा ॥ ११२ ॥

करटकः पृच्छति—कथमेतत् । दमनकः कथयति—

## ॥ कथा ६ ॥

अस्ति द्वारवत्यां पुर्यां कस्यचिद्गोपस्य वधूर्बन्धकी । सा ग्रामस्य दण्डनायकेन तत्पुत्रेण च समं रमते । तथा चोक्तम्—

---

कृतार्तनादा कृतः आर्तनादः करुणस्वनः यया । अकल्मषम्—निष्पापम् । मलयोपकण्ठान्मलयपर्वतसमीपात् । काष्ठघटितवेतालस्य दारुनिर्मितवेतालमूर्त्योः । पेशलाः—चतुराः । निम्नोन्नतानि नतोन्नतभागान् । चित्रकर्मविदः आलेख्यकुशलाः । कार्येषु गहनकार्येषु इत्यर्थात् । हीयते लुप्यते । दुर्गाणि संकटानि । बन्धकी—कुलटा, पुंश्चली । 'पुंश्चल्यां स्याच्च बन्धकी' इति मेदिनी । दण्डनायकः दण्डाधिकारी नगरशान्तिरक्षकप्रधानः ।

---

१ त्वां विहायान्यं न जाने, पुरुषान्तरं स्वप्नेपि हि न भजे तेन धर्मेण छिन्नापि मम नासिकाच्छिन्नास्तु । मया त्वं भस्म कर्तुं शक्यसे । किंतु स्वामी त्वमिति लोकभयादुपेक्ष्यसे इत्यधिकमेकस्मिन्पुस्तके । २ क्रियन्मूल्यं रत्नमिदमित्यर्थतया[illegible] ...प्र० ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ११३ ॥

अन्यच्च । न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ ११४ ॥

यतः । गुणाश्रयं कीर्तियुतं च कान्तं पतिं रतिज्ञं सधनं युवानम् ।
विहाय शीघ्रं वनिता व्रजन्ति नरं परं शीलगुणादिहीनम् ॥ ११५ ॥

अपरं च । न तादृशीं प्रीतिमुपैति नारी विचित्रशय्यां शयितापि कामम् ।
यथा हि दूर्वादिविकीर्णभूमौ प्रयाति सौख्यं परकान्तसङ्गात् ॥ ११६ ॥

अथ कदाचित्सा दण्डनायकपुत्रेण सह रममाणा तिष्ठति । अथ दण्डनायकोऽपि रन्तुं तत्रागतः । तमायान्तं दृष्ट्वा तत्पुत्रं कुशूले निक्षिप्य दण्डनायकेन समं तथैव क्रीडति । अनन्तरं तस्या भर्ता गोपो गोष्ठात्समागतः । तमालोक्य गोप्योक्तम्—दण्डनायक त्वं लगुडं गृहीत्वा कोपं दर्शयन्सत्वरं गच्छ । तथा तेनानुष्ठिते गोपेन गृहमागत्य भार्या पृष्टा । केन कार्येण दण्डनायकः समागतोऽत्र । सा ब्रूते—अयं केनापि कारणेन पुत्रस्योपरि क्रुद्धः । स च मार्गमाणोऽप्यत्रागत्य प्रविष्टो मया कुशूले निक्षिप्य रक्षितः । तत्पित्रा चान्विष्यता गृहे न दृष्टः । अतोऽयं दण्डनायकः कुपित एव गच्छति । ततः सा तत्पुत्रं कुशूलादवतार्य दर्शितवती । तथा चोक्तम्—

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ११७ ॥

अतोऽहं ब्रवीमि—उत्पन्नेष्वपि कार्येषु इत्यादि ॥ करटको ब्रूते—अस्त्वेवम् । किंत्वनयोर्महानन्योन्यनिसर्गोपजातस्नेहः कथं भेदयितुं शक्यः । दमनको ब्रूते—उपायः क्रियताम् । तथा चोक्तम्—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काकः कनकसूत्रेण कृष्णसर्पमघातयत् ॥ ११८ ॥

करटकः पृच्छति—कथमेतत् । दमनकः कथयति—

## ॥ कथा ७ ॥

कस्मिंश्चित्तरौ वायसदंपती निवसतः । तयोश्चापत्यानि तत्कोटरावस्थितेन कृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी वायसमाह—नाथ त्यज्यतामयं तरुः । अत्र यावत्कृष्णसर्पस्तावदावयोः संततिः कदाचिदपि न भविष्यति । यतः ।

---

तृप्यति काष्ठानाम् । तृतीयार्थे षष्ठी । म. भा. उ. प. ४०, ७; अ. प. ३८. २५. मानेन मानदानेन । आर्जवेन ऋजोर्भावः आर्जवं तेन सरलताप्रकाशनेन । शस्त्रेण—शस्त्रप्रहारभयेनेत्यर्थः । शास्त्रेण शास्त्रवाक्योपदेशेन । स्त्रियः वशीक्रियन्ते इति शेषः । अत एव ताः सर्वथा सर्वप्रकारेण विषमाः दुराराध्याः । गुणाश्रयं प्रशंसनीयगुणानामाधारम् । कान्तं कमनीयम् । परं नरं जारम् । प्रीतिं—प्रमोदम् । विचित्रशय्यां—रमणीयशय्याम् । दूर्वादि०—दूर्वाप्रभृत्यावृतस्थाने । कुशूले धान्यस्थापनपात्रविशेषे । द्विगुणः पुरुषापेक्षया इति शेषः । बुद्धिः चातुर्यम् । व्यवसायः—कार्ये प्रवृत्तिः । कामः—संभोगेच्छा । अन्योन्य०—अन्योन्यस्मिन् निसर्गात्स्वभावादुपजातः

---

१ किमपि । २ विहाय शीघ्रं वनिता परं नरं प्रयाति हीनं गुणजातिरूपम् । इ० पा० ३ काक्या कनकसूत्रेण कृष्णसर्पो निपातितः । इ० पा० ।

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ११९ ॥

वायसो ब्रूते--प्रिये न भेतव्यम् । वारंवारं मयैतस्य महापराधः सोढः । इदानीं पुनर्न क्षन्तव्यः । वायस्याह--कथमेतेन बलवता सार्धं भवान्विग्रहीतुं समर्थः । वायसो ब्रूते--अलमनया शङ्कया । यतः ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १२० ॥

वायसी विहस्याह--कथमेतत् । वायसः कथयति--

॥ कथा ८ ॥

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः । स च सर्वदा पशूनां वधं कुर्वन्नास्ते । ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः--मृगेन्द्र किमर्थमेकदा बहुपशुघातः क्रियते । यदि प्रसादो भवति तदा वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयामः । ततः सिंहेनोक्तम्--यद्येतदभिमतं भवतां तर्हि भवतु तत् । ततः प्रभृत्येकैकं पशुमुपकल्पितं भक्षयन्नास्ते । अथ कदाचिद्वृद्धशशकस्य कस्यचिद्वारः समायातः । सोऽचिन्तयत्--

त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥ २१ ॥

तन्मन्दं मन्दं गच्छामि । ततः सिंहोपि क्षुधापीडितः कोपात्तमुवाच-कुतस्त्वं विलम्बादागतोऽसि । शशकोऽब्रवीत्--देव नाहमपराधी । आगच्छन्पथि सिंहान्तरेण बलाद्धृतः । तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि । सिंहः सकोपमाह--सत्वरं गत्वा दुरात्मानं दर्शय । क्व स दुरात्मा तिष्ठति । ततः शशकस्तं गृहीत्वा गभीरकूपं दर्शयितुं गतः । अत्रागत्य स्वयमेव पश्यतु स्वामी इत्युक्त्वा तस्मिन्कूपजले तस्य सिंहस्यैव प्रतिबिम्बं दर्शितवान् । ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः । अतोऽहं ब्रवीमि--बुद्धिर्यस्य इत्यादि ॥ वायस्याह--श्रुतं मया सर्वम् । संप्रति यथा कर्तव्यं तद् ब्रूहि । वायसोऽवदत्--अत्रासन्ने सरसि राजपुत्रः प्रत्यहमागत्य स्नाति । स्नानसमये तदङ्गादवतारितं तीर्थशिलानिहितं कनकसूत्रं चञ्च्वा विधृत्यानीयास्मिन्कोटरे धारयिष्यसि । अथ कदाचित्स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् । अथ कनकसूत्रानुसरणप्रवृत्तै राजपुरुषैस्तत्र तरुकोटरे कृष्णसर्पो दृष्टो व्यापादितश्च । अतोहं ब्रवीमि--उपायेन हि यच्छक्यम् इत्यादि । करटको ब्रूते--यद्येवं तर्हि

---

स्नेहः मैत्री । शठं--धूर्तं, वञ्चकम् । उत्तरदायकः--समानप्रत्युक्तिदायकः । विग्रहीतुं योद्धुम् । उपढौकयामः--उपाहारार्थं दास्यामः । उपहारीकरिष्यामः । उपकल्पितम्--तदर्थं प्रेषितम् । त्रासहेतोः इ० जीविताशया प्राणरक्षापेक्षया त्रासहेतोः भयहेतोः विनीतिः विनयः क्रियते अनुष्ठीयते । तदनुरोधाद्विनयेन वर्तनं क्रियते इत्यर्थः । क्रोधाध्मातः--क्रोधेन आध्मातः उपचितक्रोधः । यथा कर्तव्यं प्रस्तुते यदुचितम् । तीर्थशिलानिहितम्--तीर्थशिला जलावतारसोपानप्रस्तरः । कनकसूत्रं सुवर्णनिर्मितकण्ठाभरणविशेषम् । कनकसूत्र०--चञ्च्वा धृतस्य

गच्छ । शिवास्ते सन्तु पन्थानः । ततो दमनकः पिङ्गलकसमीपं गत्वा प्रणम्योवाच--देव आत्ययिकं किमपि महाभयकारि मन्यमान आगतोऽस्मि । यतः ।

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ १२२ ॥

अन्यच्च । भोगस्य भाजनं राजा मन्त्री कार्यस्य भाजनम् ।
राजकार्यपरिध्वंसी[3] मन्त्री दोषेण लिप्यते ॥ १२३ ॥

अमात्यानामेष क्रमः—

वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥ १२४ ॥

पिङ्गलकः सादरमाह—अथ भवान्किं वक्तुमिच्छति । दमनको ब्रूते--देव संजीवकस्तवोपर्यसदृशव्यवहारीव लक्ष्यते । तथा चास्मत्संनिधाने श्रीमद्देवपादानां शक्तित्रयनिन्दां कृत्वा राज्यमेवाभिलषति । एतच्छ्रुत्वा पिङ्गलकः सभयं साश्चर्यं तूष्णीं स्थितः । दमनकः पुनराह--देव सर्वामात्यपरित्यागं कृत्वैक एवायं यत्त्वया सर्वाधिकारी कृतः स एव दोषः । यतः ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ १२५ ॥

अपरं च । एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते ।
निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥ १२६ ॥

अन्यच्च । विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ १२७ ॥

---

कनकसूत्रस्य अनुसरणे अनुगमने कृतोद्योगैः । आत्ययिकम्–अत्ययः नाशः प्रयोजनमस्य विनाशकारि अनिष्टम् । ' अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः ' इति मेदिनी । स्वामिपदावाप्तिपातकेच्छोः–स्वामिनः राज्ञः पदस्य अवाप्तिस्तदेव पातकं अवाप्तिरूपं पातकं वा तस्येच्छोः अभिलाषुकस्य । शक्तित्रयनिन्दा–प्रभुशक्तिः उत्साहशक्तिः मन्त्रशक्तिश्चेति शक्तित्रयं तस्य निन्दा । ' शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । ' इत्यमरः । तत्र कोशदण्डजं तेजः प्रभुशक्तिः । विक्रमबलमुत्साहशक्तिः । संध्यादीनां सामादीनां च यथावत्स्थापनं मन्त्रशक्तिः । अत्युच्छ्रिते महाबलतया अत्यन्तोन्नते । पादौ मन्त्रशक्तिप्रभुशक्तिरूपौ विष्टभ्य समवस्थाप्य । उपतिष्ठते । सुस्थिरा सती तयोः संगता भवति इत्यर्थः । उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति तङ् । असहा भरस्य तादृशावस्थानभरासहिष्णुः । न्येन न्यूनाधिकभावमुपेत्य द्वैधीभावेन स्थितयोः इत्यर्थः । अयं श्लोको मुद्राराक्षसोद्धृतः । एकमिति–मोहात् आत्मनो वास्तवपदाज्ञानात् । मदः गर्वः । मदा आलस्यं कार्यविमुखता च मदालस्यं ( स. द्वं. ) मदजनितं आलस्यं इति व द्यते आक्रान्तः भवति । स्वतन्त्रस्पृहा स्वातन्त्र्येच्छा । प्राणान्तिकं द्रुह्यति- यावदनिष्टाचरणं करोति । विषदिग्धस्य भक्तस्य–विषमिश्रितस्यान्नस्य । दुष्ट

---

१ समी० । [illegible]

किं च । यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति ।
सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ १२८ ॥

स च सर्वकार्येषु स्वेच्छातः प्रवर्तते । तदत्र प्रमाणं स्वामी । एतच्च जानामि ।

न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम् ।
परस्य युवतीं रम्यां सादरं नेक्षतेऽत्र कः ॥ १२९ ॥

सिंहो विमृश्याह—भद्र यद्यप्येवं तथापि संजीवकेन सह मम महान्स्नेहः । पश्य ।

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ १३० ॥

अन्यच्च । अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः ।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ १३१ ॥

दमनको वदति—देव स एव दोषः । यतः ।

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याश्रीयते जनः ॥ १३२ ॥

शृणु देव । अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ १३३ ॥

त्वया च मूलभृत्यानपास्यायमागन्तुकः पुरस्कृतः । एतच्चानुचितं कृतम । यतः ।

मूलभृत्यान्परित्यज्य नागन्तून्प्रतिमानयेत् ।
नातः परतरो दोषो राज्यभेदकरो यतः ॥ १३४ ॥

सिंहो ब्रूते—किमाश्चर्यम् । यन्मयायमभयवाचं दत्त्वानीतः संवर्धितश्च तत्कथं मह्यं द्रुह्यति । दमनको ब्रूते—देव ।

दुर्जनः प्रकृतिं याति सेव्यमानोऽपि नित्यशः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ १३५ ॥

अपरं च । स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः ।
मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ॥ १३६ ॥

अन्यच्च । वर्धनं वाथ सन्मानं खलानां प्रीतये कुतः ।
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ १३७ ॥

अतोऽहं ब्रवीमि—

अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत्पराभवम् ।
एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥ १३८ ॥

---

मनसः दुराशयस्य । सुखं—सुखकरम् । तद्व्यसने—तस्य सचिवस्य व्यसने सति तस्मिन्ना-पद्ग्रस्ते । संचारकैः उपदेशकैः । अत्र प्रमाणं स्वामी—परस्तात्कार्यनिर्णये इति शेषः । व्यलीकानि अपराधान् । दुष्टः दूषितः । दग्ध०—दग्धं भस्मीकृतं अशेषं मन्दिरसारं मन्दिर-गतानि श्रेष्ठवस्तूनि येन । अनादरः—अनास्था । उदासीने—परकीये, अन्यस्मिन्कस्मिंश्चित् । ...ततः दुःखकरस्य । पथ्यस्य हितस्य वक्ता श्रोता च—अप्रियस्यापि पथ्यस्य त्र समानार्थः श्लोकः किरातार्जुनीये—स किंसखा साधु न शास्ति योधिपं हिताम्न स किंप्रभुः । सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥ राज्य-नत्वविघातकः । राज्ये भेदजनको वा । भेदः उपजापः । सेव्यमानः शुश्रू-वेदन०—स्वेदनं मृदुतापादनार्थं स्वेदजननम् । अभ्यञ्जनं तैलादिना मर्दनम् । हितकराणि । सुस्वादूनि इत्यर्थः । फलानि । विपरीतमतोन्यथा—अतः विपरीतं

---

तथा चोक्तम्—

> स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
> सा स्त्री यानुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते ।
> सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
> तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ १३९ ॥

यदि संजीवकव्यसनार्दितो वि तोऽपि स्वामी न वर्तते तदेव ... स्य न दोषः । तथा च ।

> नृपः कामासक्तो गणयति न कार्यं न च हितं
> यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव ।
> ततो मानाध्मातः स पतति यदा शोकगहने
> तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥ १४० ॥

पिङ्गलकः स्वगतम् ।

> न परस्यापवादेन परेषां दण्डमाचरेत् ।
> आत्मनावगमं कृत्वा बध्नीयात्पूजयेत वा ॥ १४१ ॥

तथा चोक्तम्—

> गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे ।
> स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः ॥ १४२ ॥

प्रकाशं ब्रूते—तदा संजीवकः किं प्रत्यादिश्यताम् । दमनकः ससंभ्रममाह—देव मा मैवम् । एतावता मन्त्रभेदो जायते ।

तथा चोक्तम्—

> मन्त्रबीजमिदं गुप्तं रक्षणीयं तथा यथा ।
> मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ १४३ ॥

किं च ।

> आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः ।
> क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ १४४ ॥

---

अस्माद्विरुद्धो धर्मः अन्यथा असाधूनां खलानाम् । अनुविधायिनी—आज्ञाकारिणी, भर्तुश्चित्तानुसारिणी वा । करोति जनयति । अकृत्रिमं निष्कपटं, शुद्धमति । इन्द्रियैः न खिद्यते—तेषां वशगो भूत्वा नायास्यते । सञ्जीवकव्यसनार्दितः सञ्जीवकात् यद् व्यसनं अपायः तेन अर्दितः पीडितः । निवर्तते—आगामिव्यसनादिति शेषः । ईदृशः मादृशः । भाव्यापत्पिशुनस्य इत्यर्थः । कार्यं कर्तव्यम् । इष्टमनतिक्रम्य यथेष्टम् । स्वच्छन्दः आत्मेच्छानुवर्ती । मत्तः—नृपः गजश्च । प्रविचरति—प्रभ्रष्टः विचरति । मानाध्मातः मदोद्धतः । शोकगहने—शोकारण्ये । अविनयम्—अनुचिताचरणम् । परस्य परकृतेन । कर्तरि षष्ठी । अपवादः निन्दा आक्षेपः । अन्यकृतं दोषप्रदर्शनमिति यावत् । आत्मनावगमं कृत्वा—स्वयं याथार्थ्यं ज्ञात्वा । विधिर्न ग्रहनिग्रहे ग्रहनिग्रहौ न कर्तव्यौ इत्यर्थः । कृतौ चेत् स्वनाशाय इ० । ग्रहः निरोधः निर्बन्धः । 'ग्रहोनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥' इति विश्वः । निग्रहः दण्डः । प्रत्यादिश्यताम्—स्वपदच्युतः क्रियताम् । भिद्येत प्रकाशं गच्छेत् । न प्ररोहति अङ्कुरं न प्रसूते । विस्तारं प्राप्य न फलति इत्यर्थः । आदेयस्येति—आदेयस्य कर्मणः क्षिप्रं अक्रियमाणस्य सतः तद्रसं तस्य सारभूतं फलमिति यावत् कालः

---

१ अर्थ । २ पावक प्रवाकेत । ३ ह: पा० । ३ दोषान० । ४ विधिराग्रहनिग्रहः । ५ स ना० ।

तदवश्यं समारब्धं महता प्रयत्नेन संपादनीयम् । किं च ।

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ १४५ ॥

यद्यसौ दृष्टदोषोऽपि दोषान्निवर्त्य संधातव्यस्तदतीवानुचितम् । यतः ।

सकृद्दुष्टं तु यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमेव [illegible] ाति गर्भमश्वतरी [illegible] ा ॥ १४६ ॥

सिंहो ब्रू[illegible] —ज्ञायतां तावत्किमस्माकमसौ कर्तुं [illegible]र्थः । दमनक आह—देव ।

अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्य[illegible]र्णयः ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः ॥ १४७ ॥

सिंहः पृच्छति—कथमेतत् । दमनकः कथयति—

॥ कथा ९ ॥

दक्षिणसमुद्रतीरे टिट्टिभदंपती निवसतः । तत्र चासन्नप्रसवा टिट्टिभी भर्तारमाह—नाथ प्रसवयोग्यस्थानं निभृतमनुसंधीयताम् । टिट्टिभोऽवदत्—भार्ये नन्विदमेव स्थानं प्रसूतियोग्यम् । सा ब्रूते—समुद्रवेलया प्लाव्यते स्थानमेतत् । टिट्टिभोऽवदत्–किमहं निर्बलः येन[1] स्वगृहावस्थितः समुद्रेण निग्रहीतव्यः । टिट्टिभी विहस्याह–स्वामिन् त्वया समुद्रेण च महदन्तरम् । अथ वा ।

दुःखमात्मा परिच्छेत्तुमेवं[2] योग्यो न वेति वा ।
अस्तीदृग्यस्य विज्ञानं स कृच्छ्रेपि न सीदति[3] ॥ १४८ ॥

अपि च । अनुचितकार्यारम्भः स्वजनविरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥ १४९ ॥

ततः [ कृच्छ्रेण ] स्वामिवचनात्तत्रैव प्रसूता सा । एतत्सर्वं श्रुत्वा समुद्रेणापि तच्छक्तिज्ञानार्थं तदण्डान्यपहृतानि । ततष्टिट्टिभी शोकार्ता भर्तारमाह--नाथ कष्टमापतितम् । तान्यण्डानि मे नष्टानि । टिट्टिभोऽवदत्—प्रिये मा भैषीः । इत्युक्त्वा पक्षिणां मेलकं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । तत्र गत्वा सकलवृत्तान्तः टिट्टिभेन भगवतो गरुडस्य पुरतो निवेदितः—देव

---

पिबति ग्रसते । संपादनीयम्–निर्वर्तनीयं, समाप्तिं नेतव्यम् । संवृतैः सुगुप्तैः कवचाच्छादितैश्च । भेदशङ्कया–प्रकाशशङ्कया विदारणशङ्कया च । गर्भमश्वतरी यथा–यथा अश्वतरी गर्दभजा अश्वा गर्भं मृत्युमेव गृह्णाति गर्भरूपं मृत्युमेवोदरे वहति इत्यर्थः । सा हि गर्भमोचनसमये उदरभेदान्म्रियते इति प्रसिद्धिः । तथा हि महाभारतम्—'दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥' रामायणं च–'उदरस्थ समुत्थाने स्वगर्भोऽश्वतरीमिव' [ हन्ति ] इ० । अङ्गाङ्गिभावम्–न्यूनाधिकतां, प्रधानाप्रधानताम् । आसन्नप्रसवा–आसन्नः प्रसवः प्रसूतिकालः यस्याः सा । निभृतम्–दृष्टेरगोचरम् । अनुसंधीयतां–निरूप्यतां, अन्विष्यताम् । निग्रहीतव्यः–अण्डापहाररूपनिग्रहेण अवज्ञातव्यः । दुःखमिति–आत्मा स्वयं योग्यः कर्मणि शक्तो न वेति परिच्छेत्तुं निश्चयेन ज्ञातुं दुःखं कष्टमेव । सहसात्मनो योग्यायोग्यता न ज्ञायते इत्यर्थः । न सीदति न विधुरो

---

१ येन मम गृहावस्थितान्यण्डानि समुद्रेणापहर्तव्यानि इ. पा. ।

२ पराभवं परिच्छेत्तुं योग्यायोग्यं च वेत्ति यः ।

अस्तीह यस्य विज्ञानं कृच्छ्रेणापि न सीदति ॥ इ. पा. ।

समुद्रेणाहं स्वगृहावस्थितो विनापराधेनैव निगृहीत इति । ततस्तद्वचनमाकर्ण्य गरुत्मता प्रभुर्भगवान्नारायणः सृष्टिस्थितिप्रलयहेतुर्विज्ञप्तः । स समुद्रमण्डदानायादिदेश । ततो भगवदाज्ञां मौलौ निधाय समुद्रेण तान्यण्डानि टिट्टिभाय समर्पितानि । अतोऽहं ब्रवीमि—अङ्गाङ्गिभावमज्ञात्वा इत्यादि । राजाह—कथमसौ ज्ञातव्यो द्रोहबुद्धिरिति । दमनको ब्रूते—यदासौ सदर्पः शृङ्गाग्रप्रहरणाभिमुखश्चकित इवागच्छति तदा ज्ञास्यति स्वामी । एवमुक्त्वा संजीवकसमीपं गतः । तत्र गतश्च मन्दं मन्दमुपसर्पन्विस्मितमिवात्मानमदर्शयत् । संजीवकेन सादरमुक्तम्—भद्र कुशलं ते । दमनको ब्रूते— अनुजीविनां कुतः कुशलम् । यतः ।

संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसंश्रयाः ॥ १५० ॥

अन्यच्च । कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को वास्ति राज्ञां प्रियः
कः कालस्य भुजान्तरं न च गतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ १५१ ॥

संजीवकेनोक्तम्—सखे ब्रूहि किमेतत् । दमनक आह—किं ब्रवीमि मन्दभाग्यः । पश्य ।

यथा समुद्रे निर्मग्नो लब्ध्वा सर्पावलम्बनम् ।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि संप्रति ॥ १५२ ॥

यतः । एकत्र राजविश्वासो नश्यत्यन्यत्र बान्धवः ।
किं करोमि क्व गच्छामि पतितो दुःखसागरे ॥ १५३ ॥

इत्युक्त्वा दीर्घं निःश्वस्योपविष्टः । संजीवको ब्रूते—तथापि मित्र सविस्तरं मनोगतमुच्यताम् । दमनकः सुनिभृतमाह—यद्यपि राजविश्वासो न कथनीयस्तथापि भवानस्मदीयप्रत्ययादागतः । मया परलोकार्थिनावश्यं तव हितमाख्येयम् । शृणु । अयं स्वामी तवोपरि विकृतबुद्धी रहस्युक्तवान्—संजीवकमेव हत्वा स्वपरिवारं तर्पयामि । एतच्छ्रुत्वा संजीवकः परं विषादमगमत् । दमनकः पुनराह । अलं विषादेन । प्राप्तकालकार्यमनुष्ठीयताम् । संजीवकः क्षणं विमृश्याह । सुष्ठु खल्विदमुच्यते ।

---

भवति, नाशं नैतीति वा । मेलकम्—सभाम् । सृष्टिस्थितिप्रलयहेतुः जगतः सृष्टिः उत्पत्तिश्च स्थितिः पालनं च प्रलयः संहारश्च तेषां हेतुः कारणम् । मौलौ निधाय मस्तके कृत्वा, शिरसाऽभ्यर्च्य । अतिविनयेन भगवदाज्ञां पालयित्वेत्यर्थः । द्रोहबुद्धिः पापमतिः । अपायचिन्तनपरः इत्यर्थः । शृङ्गाग्र०-शृङ्गयोरग्रे ताभ्यां प्रहरणं तत्र अभिमुखः । चकित इव-संरब्धचित्त इव संभ्रान्त इव । पराधीनाः नृपेच्छायत्ता इत्यर्थः । अनिर्वृतम्-आकुलम् । राजसंश्रयाः भूपालावलम्बिनः, राजसेवकाः । विषयिणः-भोगासक्तस्य, विषयसुखरतस्य । अस्तं गताः-अन्तं याताः । न कस्यापि इत्यर्थः । खण्डितम्-विकलीकृतं, प्रतिप्रेमाभावाद्व्याहतम् । कालस्य इ०-यमस्य वशतां न गतः कालेन न कवलितः । दुर्जनवागुरासु दुर्जनानां खलानां वागुरासु कपटजालेषु । मुग्धः-किंकर्तव्यतामूढः । इतिकर्तव्यताशून्यः इत्यर्थः । मनोगतं यद् हृदयस्थितं तत् । राजविश्वासः राज्ञा विश्वस्य कथितम् । विकृतबुद्धिः विकृता विपरीतभावमापन्ना बुद्धिः यस्य । प्राप्तः कालो यस्य तत्प्राप्तकालं कालोचितम् ।

---

१ सेवकाः इ० पा० । २ मज्जन्नपि पयोराशौ इ० पा० । ३ [illegible] इत्यधि० ।

दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी च ॥ १५४ ॥

स्वगतम्--तत्किमिदमेतद्विचेष्टितं न वेत्येतद्व्यवहारादेव निर्णेतुं न शक्यते। यतः।

कश्चिदाश्रयसौन्दर्याद्धत्ते शोभामसज्जनः।
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम् ॥ १५५ ॥

कष्टं किमिदमापतितम्। यतः।

आराध्यमानो नृपतिः प्रयत्नान्न तोषमायाति किमत्र चित्रम्।
अयं त्वपूर्वप्रतिमाविशेषो यः सेव्यमानो रिपुतामुपैति ॥ १५६ ॥

तदयमशक्यार्थः प्रमेयः। यतः।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य वै
कथं जनस्तं परितोषयिष्यति ॥ १५७ ॥

किं मयापकृतं राज्ञः। अथ वा निर्निमित्तापकारिणश्च भवन्ति राजानः। दमनको ब्रूते--एवमेतत्। शृणु।

विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति किंचि-
त्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १५८ ॥

अन्यच्च। कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ १५९ ॥

किं च। चन्दनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः।
गुणघातिनश्च भोगे खला न च सुखान्यविघ्नानि ॥ १६० ॥

---

दुर्जनगम्याः--दुष्टलोकैः लभ्याः। अपात्रभृत्-अपात्रं अयोग्यपुरुषं बिभर्तीति। गिरिजलधिवर्षी--न सस्यक्षेत्रवर्षी इत्यर्थः। सर्वत्र विसंष्ठुला एव विधिप्रवृत्तिः इति भावः। कश्चिद् असज्जनः--स्वाश्रययोगेनैव शोभां धत्ते बहिः रमणीयो दृश्यते। अन्तस्तु खलचरित एव इति भावः। मलीमसं मलिनं अञ्जनं कज्जलमिव। प्रतिमाविशेषः---मूर्तिविशेषः, विचित्रा विधातुर्घटना इत्यर्थः। अशक्यार्थः अशक्यः असाध्यः अर्थः विषयः यस्य। प्रमेयः अर्थ इति शेषः। तस्यापगमे तस्य निमित्तस्य अपगमे दूरीभावे। तस्मिन्निराकृते इत्यर्थः। निर्निमित्त०--निर्गतं निमित्तं यस्मिन्कर्मणि तद्यथा तथा कारणव्यतिरेकेण अपकुर्वन्ति तादृशाः। विज्ञैः विशेषं जानन्तीति विज्ञाः विचक्षणाः। तैः स्निग्धैः हितबुद्धिभिः। उपकृतमपि किंचित् उपकारत्वेन कृतमपि किंचित्। दुर्ग्राह्यत्वाद्दुर्ज्ञेयत्वात्। नैकभावाश्रयाणां अस्थिरचित्तानामित्यर्थः। द्वेष्यतामेति द्वेषं संपादयति। कृतशतम्--कृतोपकारशतम्। असत्सु--अकृतज्ञेषु। नष्टं--विफलं भवतीति शेषः। अबुधेषु--काव्यरसानभिज्ञेषु। अवचनकरे--वाक्यपालनपराङ्मुखे। अचेतने ज्ञानरहिते। चन्दनतरुषु--चन्दनस्य घ्राणतर्पणः गन्धः अस्ति किंतु तत्र भुजंगभयं इत्यर्थः। ग्राहाः नक्राः। भोगे अमात्यपदादीनामिति शेषः। गुणघातिनः

---

१ इत्यस्मात्परम्--नीचमाश्रयते लक्ष्मीरकुलीनं सरस्वती। अपात्रं भजते नारी गिरौ वर्षति वासवः॥ इत्यधिकमेकस्मिन्पुस्तके। २ अस्मात्प्राक्--तत्र विचिन्त्योक्तम् इत्यधिकं क्वचित्; किमेतत् इ. पा. ३ संतोष. ४ ... ५ ... ६ ...

अन्यच्च । मूलं भुजंगैः कुसुमानि भृङ्गैः शाखाः प्लवङ्गैः शिखराणि भल्लैः ।
नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं दुष्टतरैश्च हिंस्रैः ॥ १६१ ॥

अयं तावत्स्वामी वाङ्मधुरो विषहृदयो मया ज्ञातः । यतः ।

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ १६२ ॥

तथा हि । पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै शृणिः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ १६३ ॥

संजीवकः (पुनर्निःश्वस्य)—कष्टं भोः । कथमहं सस्यभक्षकः सिंहेन निपातयितव्यः । यतः ।

ययोरेव समं वित्तं ययोरेव समं बलम् ।
तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ १६४ ॥

( पुनर्विचिन्त्य ) । केनायं राजा ममोपरि विकारितो न जाने । भेदमुपगताद्राज्ञः सदा भेतव्यम् । यतः ।

मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् ।
वलयं स्फाटिकस्येव को हि संधातुमीश्वरः ॥ १६५ ॥

अन्यच्च । वज्रं च राजतेजश्च द्वयमेवातिभीषणम् ।
एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ १६६ ॥

तत्संग्रामे मृत्युरेवाश्रीयताम् । इदानीं तदाज्ञानुवर्तनमयुक्तम् । यतः ।

मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १६७ ॥

युद्धकालश्चायम् ।

यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः ।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ १६८ ॥

यतः । अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १६९ ॥

---

गुणलोपकारिणः खलाः पिशुनाः । भल्लैः ऋक्षैः । दुष्टतरैः अतिदुष्टैः । उच्छ्रितपाणिः उन्नमितहस्तः । प्रोत्सारित०–प्रोत्सारितं उत्सृष्टं अर्धासनं येन । अन्तर्भूतविषः–अन्तर्भूतं विषं यस्य । मधुमयः मधुप्रचुरः । बहिः रमणीयं व्यवहरन् इत्यर्थः । मायापटुः कपटजालविस्तरणे कुशलः । पोतः—नौका । शृणिः—अङ्कुशः । भग्नोद्यमः—विफलप्रयत्नः । उत्तमाधमयोः उत्कृष्टनिकृष्टयोः, हीनाधिकबलयोः । विकारितः—विकृतिं प्रापितः । भेदमुपगतात्—विकृतात् विद्वेषभावं गतात् । विघटितं—विश्लेषितम् । ईश्वरः समर्थः । वज्रं कुलिशम् । विद्युत्पात इति यावत् । समन्ततः सर्वव्यापीति ततो विशिष्यत इत्यर्थः ।

---

१ प्रोच्चारिता० इ० पा० । २ तथा पश्य. ३ सिंहे निपतितः । ४ संग्राममृत्युः । ५ [illegible]

जयं च लभते लक्ष्मीं मृतेनापि सुराङ्गनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥ १७० ॥

एतच्चिन्तयित्वा संजीवक आह--भो मित्र कथमसौ मां जिघांसुर्ज्ञातव्यः । दमनको ब्रूते--यदासौ समुद्धतलाङ्गूल उन्नतचरणो विवृतास्यस्त्वां पश्यति तदा त्वमपि स्वविक्रमं दर्शयिष्यसि । यतः ।

बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ १७१ ॥

किंतु सर्वमेतत्सुगुप्तमनुष्ठातव्यम् । नो चेन्न त्वं नाहम् । इत्युक्त्वा दमनकः करटकसमीपं गतः । करटकेनोक्तम्--किं निष्पन्नम् । दमनकेनोक्तम्--निष्पन्नोऽसावन्योन्यभेदः । करटको ब्रूते--कोऽत्र संदेहः । यतः ।

बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः ।
को न हृष्यति वित्तेन कुकृत्ये को न पण्डितः ॥ १७२ ॥

अन्यच्च । दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये ।
किं नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥ १७३ ॥

ततो दमनकः पिङ्गलकसमीपं गत्वा देव समागतोऽसौ पापाशयः । तत्सज्जीभूय स्थीयताम् इत्युक्त्वा पूर्वोक्ताकारं कारयामास । संजीवकोऽप्यागत्य तथाविधं विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार । ततस्तयोः प्रवृत्ते महाहवे संजीवकः सिंहेन व्यापादितः ।

अथ पिङ्गलकः संजीवकं व्यापाद्य विश्रान्तः सशोक इव तिष्ठति । ब्रूते च--किं मया दारुणं कर्म कृतम् । यतः ।

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम् ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १७४ ॥

अपरं च । भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशे ।
भृत्यप्रणाशो मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्याः ॥ १७५ ॥

दमनको ब्रूते--स्वामिन् कोऽयं नूतनो न्यायो यदरातिं हत्वा संतापः क्रियते । तथा चोक्तम्--

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् ।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ १७६ ॥

अपि च । धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् ।
न हि हस्तस्थमप्यन्नं क्षमावानक्षितुं क्षमः ॥ १७७ ॥

---

मृतेन मरणेन । अत्रानुरूपो भावः वेणीसंहारे--'अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वे' इति । जिघांसुः हन्तुमिच्छुः । अभिभवास्पदम्--पराभवस्थानं, केन न पराभूयते सर्वैः पराभूयते एव इत्यर्थः । भस्मचये भस्मसमूहे । न त्वं नाहम्--उभावपि विनंक्ष्याव इत्यर्थ । दुर्वृत्तः इति--धूर्तैः शठैः । आत्मविवृद्धये आत्मन उत्कर्षसाधनार्थम् । श्रीमान् दुर्वृत्तः दुश्चरितः क्रियते । आश्रयाशवत्--आश्रयं आधारं अश्नाति भस्मसात्करोतीति आश्रयाशः अग्निः तेन तुल्यम् । परैरिति--राजा धर्मातिक्रमतः धर्मलङ्घनात्पापस्य भाजनं भवति राज्यं तु परैः भुज्यते । यथा सिंहः कृतहस्तिवधपातक एव तिष्ठति । हतहास्तिनो दन्ताः तद्गण्डस्थलगतानि च मौक्तिकान्यन्ये एव गृह्णन्ति तथा इत्यर्थः । प्रणाशे--उपस्थिते इति शेषः । धर्मार्थकामतत्त्वज्ञः--त्रिवर्गसाधनपर इत्यर्थः ।

---



१ समुद्धये. २ संनिधानं. ३ उपविश्यताम्.

किं च । क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ १७८ ॥

अपरं च । राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् ।
प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥ १७९ ॥

अन्यच्च । राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या इमे यश्च कृतं न वेत्ति ॥ १८० ॥

विशेषतश्च । सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुररत्नधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ १८१ ॥

इति दमनकेन संतोषितः पिङ्गलकः स्वां प्रकृतिमापन्नः सिंहासने उपविष्टः । दमनकः प्रहृष्टमनाः विजयतां महाराजः शुभमस्तु सर्वजगताम् इत्युक्त्वा यथासुखमवस्थितः ॥

विष्णुशर्मोवाच—सुहृद्भेदः श्रुतस्तावद्भवद्भिः । राजपुत्रा ऊचुः—भवत्प्रसादाच्छ्रुतः । सुखिनो भूता वयम् । विष्णुशर्माब्रवीत्-अपरमपीदमस्तु—

सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाकृष्टः प्रलयमुपसर्पत्वहरहः ।
जनो नित्यं भूयात्सकलसुखसंपत्तिवसतिः
कथारामे रम्ये सततमिह बालोऽपि रमताम् ॥ १८२ ॥

---

# ॥ विग्रहः ॥

पुनः कथारम्भकाले राजपुत्रैरुक्तम् । आर्य राजपुत्रा वयम् । तद्विग्रहं श्रोतुं नः कुतूहलमस्ति । विष्णुशर्मणोक्तं—यदेव भवद्भ्यो रोचते तत्कथयामि । विग्रहः श्रूयतां यस्यायमाद्यः श्लोकः—

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे ।
विश्वास्य वञ्चिता हंसाः काकैः स्थित्वारिमन्दिरे ॥ १ ॥

---

अनायत्ता स्वैरिणी इत्यर्थः । दुष्प्रकृतिः दुष्टस्वभावः । सहायः सहचरः । प्रेष्यः भृत्यः । प्रतीपः—स्वामिनिदेशलङ्घी प्रतिकूलाचरणः । अधिकृतः कार्याधिकारी । सत्यानृता—सत्यं अनृतं च यस्याम् । परुषा विषयविशेषे कठिणा । अर्थपरा—स्वार्थसाधनतत्परा, द्रव्यार्जनतत्परा वा । वदान्या—कदाचित् दानशीला । प्रचुर०—प्रचुराणां रत्नानां च आगमः यत्र । वाराङ्गना—वेश्या । शत्रुनिलये—वैरिगृहे । कालाकृष्टः—कालेन आकृष्टः तद्वशगः । प्रलयमुपसर्पतु—विनाशं यातु । अहरहः—प्रत्यहम् । सकल०—सकलानां सुखानां संपत्तिः प्राचुर्यं तस्या वसतिः निवासस्थानम् । कथारामे—कथोद्याने । कथारम्भे इति पाठे कथाप्रबन्ध इत्यर्थः ।

राजपुत्रा वयम्—अनेन तेषां कियानपि मनःप्रबोधो व्यज्यते । तुल्यविक्रमे—तुल्यः विक्रमः यस्मिन् । विग्रहे युद्धे । अकर्णधारा नास्ति कर्णधारः नाविकः यस्याः

राजपुत्रा ऊचुः—कथमेतत् । विष्णुशर्मा कथयति—

अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः । यतः ।

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ २ ॥

अपरं च । प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् ।
वर्धनाद्रक्षणं श्रेयस्तदभावे सदप्यसत् ॥ ३ ॥

एकदासौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखासीनः परिवारपरिवृतस्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच—दीर्घमुख देशान्तरादागतोऽसि । वार्तां कथय । स ब्रूते—देव अस्ति महती वार्ता । तामाख्यातुकाम एव सत्वरमागतोऽहम् । श्रूयताम् । अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च—कस्त्वम् । कुतः समागतोऽसि । तदा मयोक्तम्–कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोऽहम् । कौतुकाद्देशान्तरं द्रष्टुमागतोऽस्मि । एतच्छ्रुत्वा पक्षिभिरुक्तम्–अनयोर्देशयोः को देशो भद्रतरो राजा च । मयोक्तम्–आः किमेवमुच्यते । महदन्तरम् । यतः कर्पूरद्वीपः स्वर्ग एव राजहंसश्च द्वितीयः स्वर्गपतिः । अत्र मरुस्थले पतिता यूयं किं कुरुथ । आगच्छतास्मद्देशो गम्यताम् । ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः । तथा चोक्तम्—

पयःपानं भुजंगानां केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥ ४ ॥

अन्यच्च । विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याथ स्थानभ्रष्टा ययुः खगाः ॥ ५ ॥

राजोवाच—कथमेतत् । दीर्घमुखः कथयति—

॥ कथा १ ॥

अस्ति नर्मदातीरे पर्वतोपत्यकायां विशालः शाल्मलीतरुः । तत्र निर्मितनीडक्रोडे पक्षिणः सुखं वर्षास्वपि निवसन्ति । अथैकदा वर्षासु नीलपटलैरिव जलधर-

सा । विप्लवेत–नाशमाप्नुयात् । कामन्दकनी० १. १०. वर्धनादिति–प्रजाकृतराजवर्धनाद्राजकृतप्रजारक्षणं श्रेयः प्रधानम् । यतः रक्षणाभावे सदपि विद्यमानमपि वस्तु असदविद्यमानमिव भवति । अपहारशङ्कयेति भावः । सुविस्तीर्ण०–सुविस्तीर्णः कमलघटितः पर्यंकः सिंहासनं सुविस्तीर्णे कमलमेव पर्यंकः इति वा तस्मिन् । आख्यातुकामः—आख्यातुं कामः यस्य । 'तुंकाममनसोरपि' इति वचनात् मकारलोपः । भद्रतरः–अन्यापेक्षया श्रेष्ठतरः । राजा च भद्रतरः । मरुस्थले धन्वभूमौ निर्जलप्रदेशे । 'समानौ मरुधन्वानौ' इत्यमरः। मरुभूमिवत् निसर्गसौन्दर्यहीने रूक्षप्रदेशे इत्यर्थः । यूयं किं कुरुथ यूयं दुःखभागिन एव इत्यर्थः । विषवर्धनं–शरीरपोषणेन विषोपचयादिति भावः । विद्वान् सदसद्विवेकवान् । प्रकोपाय–प्रकोपजननार्थम् । अथ–उपदेशानन्तरम् । अथशब्दस्यानन्तर्यमर्थः । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । पर्वतोपत्यकायाम् पर्वतस्य उपत्यकायां आरान्नभूमौ । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन् । निर्मितनीडक्रोडे–निर्मितानां नीडानां कुलायानां क्रोडे गर्भे । वर्षासु प्रावृट्समये । अयं

पटलैरावृते नभस्तले धारासारैर्महती वृष्टिर्बभूव। ततो वानरांस्तरुतलेऽवस्थिताञ्शीतार्तान्किम्पमानानवलोक्य कृपया पक्षिभिरुक्तम्-- भो भो वानराः शृणुत ।

अस्माभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः ।
हस्तपादादिसंयुक्ता यूयं किमिति सीदथ ॥ ६ ॥

तच्छ्रुत्वा वानरैर्जातामर्षैरालोचितम्--अहो निर्वातनीडगर्भावस्थिताः सुखिनः पक्षिणोऽस्मान्निन्दन्ति । तद्भवतु तावद्वृष्टेरुपशमः। अनन्तरं शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीडा भग्नास्तेषामण्डानि चाधः पातितानि। अतोऽहं ब्रवीमि-विद्वानेवोपदेष्टव्यः इत्यादि । राजोवाच--ततस्तैः किं कृतम् । बकः कथयति ततस्तैः पक्षिभिः कोपादुक्तम्-केनासौ राजहंसः कृतो राजा । ततो मयापि जातकोपेनोक्तम्-युष्मदीयमयूरः केन राजा कृतः। एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः ।
ततो मयापि स्वविक्रमो दर्शितः । यतः ।

अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ७ ॥

राजा विहस्याह—

आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् ।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ ८ ॥

अन्यच्च । सुचिरं हि चरन्नित्यं क्षेत्रे सस्यमबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः ॥ ९ ॥

बकः पृच्छति कथमेतत् । राजा कथयति—

॥ कथा २ ॥

अस्ति हस्तिनापुरे विलासो नाम रजकः । तस्य गर्दभोऽतिवाहनाद्दुर्बलो मुमूर्षुरिवाभवत् । ततस्तेन रजकेनासौ व्याघ्रचर्मणा प्रच्छाद्यारण्यसमीपे सस्यक्षेत्रे नियुक्तः । ततो दूरात्तमवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते । अथै-

---

शब्दो नित्यबहुवचनान्तः । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । नीलपटलैः नीलाच्छादनैः अवगुण्ठनैः 'पटलैः समूहैः । 'पटलं तिलके नेत्ररोगे छदिषि संचये ।' इति हैमः । धारासारैः-अविरतधारासंपातैः । शीतार्तान्-शीतेन पीडितान् । चञ्चुमात्राहृतैः-चञ्चुरेव चञ्चुमात्रं तैः आहृतैः । सीदथ—दुःखं अनुभवथ । जातामर्षैः— जातः उत्पन्नः अमर्षः क्रोधः येषां तैः । आलोचितम्—चिन्तितम् । तद्भवतु इ०—तावद् अवधौ । 'यावत्तावच्च साकल्येऽवधौ' इत्यमरः । उपशमः-शान्तिः । निवृत्तिः । अन्यदेति-अन्यदा सुरतव्यतिरिक्ते काले योषितो लज्जेव पुंसोऽन्यदा अपरिभवे क्षमा शमो भूषणम् । परिभवे तु योषितः सुरतेषु वैयात्यं धाष्टर्यमिव । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः। पराक्रमः पौरुषं भूष्यतेऽनेनेति भूषणमाभरणम् । इति शिशुपालवधे मल्लिनाथः । यः आत्मनः परेषां शत्रूणां च बलाबलं सामर्थ्यासामर्थ्यं समीक्ष्य सम्यक् पर्यालोच्य अन्तरं न जानाति आत्मनः बलं कियत् शत्रूणां बलं कियद् इति न विचारयति स शत्रुभिः परिभूयते । सस्यम्-क्षेत्रगतं धान्यम् । तदुक्तम् 'सस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते । निस्तुषस्तण्डुलः प्रोक्तः स्विन्नमन्नमुदाहृतम् ॥' इति । द्वीपिचर्मपरिच्छन्नः-व्याघ्रचर्मणाच्छादितः। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । वाग्दोषात् वाचः दोषाद्रटनापराधात् । अतिवाहनात्-गुरुभारवहनश्रमात् । मुमूर्षुः आसन्नमृत्युः । व्याघ्रबुद्ध्या—व्याघ्रोऽयमिति मत्वा

कदा केनापि सस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुःकाण्डं सज्जीकृत्यानतकायेनैकान्ते स्थितम्। तं च दूराद् दृष्ट्वा गर्दभः पुष्टाङ्गो यथेष्टसस्यभक्षणजातबलो गर्दभीयमिति मत्वोच्चैः शब्दं कुर्वाणस्तदभिमुखं धावितः। ततस्तेन सस्यरक्षकेण चीत्कारशब्दान्निश्चित्य गर्दभोऽयमिति लीलयैव व्यापादितः। अतोऽहं ब्रवीमि-सुचिरं हि चरन्नित्यम् इत्यादि ॥ ततस्ततः। दीर्घमुखो ब्रूते—ततस्तैः पक्षिभिरुक्तम्—अरे पाप दुष्ट बक अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि तन्न क्षन्तव्यमिदानीम्। इत्युक्त्वा ते सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः—पश्य रे मूर्ख स हंसस्तव राजा सर्वथा मृदुः। तस्य राज्येऽधिकार एव नास्ति। यत एकान्ततो मृदुः करतलगतमप्यर्थं रक्षितुमक्षमः। कथं स पृथिवीं शास्ति राज्यं वा तस्य किम्। त्वं कूपमण्डूकस्तेन तदाश्रयमुपदिशसि। शृणु।

सेवितव्यो महावृक्षः फलच्छायासमन्वितः।
यदि दैवात्फलं नास्ति च्छाया केन निवार्यते ॥ १० ॥

अन्यच्च। हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ११ ॥

अन्यच्च। महानप्यल्पतां याति निर्गुणे गुणविस्तरः।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १२ ॥

विशेषतश्च। व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे।
शशिनो व्यपदेशेन शशकाः सुखमासते ॥ १३ ॥

मयोक्तम्—कथमेतत्। पक्षिणः कथयन्ति—

॥ कथा ३ ॥

कदाचिद्वर्षास्वपि वृष्टेरभावात्तृषार्तो गजयूथो यूथपतिमाह—नाथ कोऽभ्युपायोऽस्माकं जीवनाय। अस्त्यत्र क्षुद्रजन्तूनां निमज्जनस्थानम् वयं तु निमज्जनाभावादन्धा इव। क्व यामः किं कुर्मः। ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान्। ततो दिनेषु गच्छत्सु तत्तीरावस्थिता गजपादाहतिभिश्चूर्णिताः क्षुद्रशशकाः। अनन्तरं शिलीमुखो नाम शशकश्चिन्तयामास—अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमत्रागन्तव्यम्। अतो विनश्यत्यस्मत्कुलम्। ततो विजयो नाम वृद्धशशकोऽवदत्। मा विषीदत। मयात्र प्रतीकारः कर्तव्यः। ततोऽसौ प्रतिज्ञाय चलितः। गच्छता च तेनालोचितम्—कथं मया गजयूथसमीपे स्थित्वा वक्तव्यम्।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ १४ ॥

---

धूसरकम्बल०—धूसरः ईषत्पाण्डुः पांशुवर्णो वा। 'ईषत्पाण्डुस्तु धूसरः' इत्यमरः। कम्बलः तेन कृतं तनुत्राणं शरीरावगुण्ठनं येन। धनुःकाण्डं—धनुर्बाणम्। आनतकायेन—आनतः कायः यस्य तेन। मृदुः—कोमलाङ्गः, अल्पसारश्च। राज्येऽधिकारः—राज्ये राज्ञः कर्म राज्यं तस्मिन् प्रजापालनादिकर्मणि अधिकारः योग्यता। करतलगतं—हस्ततलस्थं, सर्वथा स्वायत्तम्। शौण्डिकी—शुण्डा सुरा पण्यमस्याः सुराविक्रयकर्त्री। वारुणी सुरा। आधाराधेयभावेन—बिंबकबिंबितसंबन्धेन। व्यपदेशे—कूटप्रयोगे, कपटोपाये। अतिशक्ते—निरतिशयपराक्रमशालिनि। गजयूथः—गजानां कुलम्। 'सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम्' इत्यमरः। आहतिभिः-

---

११–१२ श्लोकयोर्मध्येयं श्लोक एकस्मिन्पुस्तके—अजां सिंहप्रसादेन वने चरति निर्भयम्। राममासाद्य लङ्कायां लेभे राज्यं बिभीषणः। १ वयं च निमज्जनस्थानाभावान्मृतार्हा इव इ० पा०। २ पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः इ० पा०।

अतोऽहं पर्वतशिखरमारुह्य यूथनाथं संवादयामि । तथानुष्ठिते यूथनाथ उवाच—कस्त्वम् । कुतः समायातः । स ब्रूते—शशकोऽहम् । भगवता चन्द्रेण भवदन्तिकं प्रेषितः । यूथपतिराह—कार्यमुच्यताम् । विजयो ब्रूते—

उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥१५॥

तदहं तदाज्ञया ब्रवीमि शृणु । यदेते चन्द्रसरोरक्षकाः शशकास्त्वया निःसारितास्तन्न युक्तं कृतम् । यतस्ते शशकाश्चिरमस्माकं रक्षिताः । अत एव मे शशाङ्क इति प्रसिद्धिः । एवमुक्तवति दूते यूथपतिर्भयादिदमाह—इदमज्ञानतः कृतम् । पुनर्न गमिष्यामि । दूत उवाच—यद्येवं तदत्र सरसि कोपात्कम्पमानं भगवन्तं शशाङ्कं प्रणम्य प्रसाद्य गच्छ । ततो रात्रौ यूथपतिं नीत्वा जले चञ्चलं चन्द्रबिम्बं दर्शयित्वा यूथपतिः प्रणामं कारितः । उक्तं च तेन—देव अज्ञानादनेनापराधः कृतः । ततः क्षम्यताम् । नैवं वारान्तरं विधास्यते । इत्युक्त्वा प्रस्थापितः । अतोऽहं ब्रवीमि—व्यपदेशेऽपि सिद्धिः स्यात् इति । ततो मयोक्तम्—स एवास्मत्प्रभू राजहंसो महाप्रतापोऽतिसमर्थः । त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते किं पुना राज्यम् इति । तदाहं तैः पक्षिभिः दुष्ट कथमस्मद्भूमौ चरसि इत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां प्रदर्श्य तैः प्रणम्योक्तम्—देव अवधीयतामेष दुष्टो बको यदस्मद्देशे चरन्नपि देवपादानधिक्षिपति । राजाह—कोऽयम् । कुतः समायातः । ते ऊचुः—हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः । अथाहं गृध्रेण मन्त्रिणा पृष्टः—कस्तत्र मुख्यो मन्त्री इति । मयोक्तम्—सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः । गृध्रो ब्रूते—युज्यते । स्वदेशजोऽसौ । यतः ।

स्वदेशजं कुलाचारं विशुद्धमुपधाशुचिम् ।
मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ १६ ॥
अधीतव्यवहाराङ्गं मौलं ख्यातं विपश्चितम् ।
अर्थस्योत्पादकं सम्यग्विदध्यान्मन्त्रिणं नृपः ॥ १७ ॥

अत्रान्तरे शुकेनोक्तम्—देव कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव । तत्रापि देवपादानामेवाधिपत्यम् । ततो राज्ञाप्युक्तम्—एवमेव यतः ।

राजा मत्तः शिशुश्चैव प्रमदा धनगर्वितः ।
अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यमेव यत् ॥ १८ ॥

---

ताडनैः । अवध्यभावेन वधानर्हत्वात् । अवधीयताम्—सावधानं श्रूयताम् । सर्वशास्त्रार्थपारगः सर्वेषां शास्त्राणां अर्थस्य विषयस्य पारगः पारदृश्वा निखिलागमज्ञानसंपन्न इत्यर्थः । कुलाचारम्—कुलं च आचारश्च अस्यास्तीति तं कुलीनं साध्वाचरणं च । उपधाशुचिम्—उपधया परीक्षया शुचिं सिद्धगुणम् । उपधा राज्ञा धर्मार्थकामभयैः अमात्यादेः परीक्षणम् । 'उपधा धर्माद्यैर्यत्परीक्षणम्' इत्यमरः । 'धर्मोपधाभिर्विप्रांश्च सर्वाभिः सचिवान्पुनः [ शोधयेत् ]' इति कालिकापुराणम् । अव्यसनिनम्—दुष्टतादौरात्म्यक्षतिद्वेषेर्ष्याप्रतारणाक्रूरोक्तिनिष्ठुराचरणमित्यष्टदोषरहितम् । व्यभिचारविवर्जितम्—व्यभिचारः सन्मार्गाद् भ्रंशनं तद्रहितं सन्मार्गस्थितम् । अधीतव्यवहाराङ्गं विवादनिर्णयशास्त्रज्ञम् । मौलम्—मूलादागतम् । विपश्चितम्—दोषज्ञम् । अप्राप्यमपि वाञ्छन्ति यत्पुनः लभ्यं लब्धुं शक्यं तद्वाञ्छन्तीति किं वक्तव्यं तस्य का कथेत्यर्थः । 'लभ्यतेपि यत्' इति पाठे यत् लभ्यते तद् वाञ्छन्ति

---

१ तदयुक्तम् इ० पा० । २ यतो रक्षकशशकास्तेऽस्मदीयाः; यतो रक्षकास्ते शशकामदीयाः इ० पा० । ३ अवधार्यताम्. ४ शास्त्रज्ञम् इ० पा० । ५ लभ्यतेपि यत् इ० पा० ।

ततो मयोक्तम्—यदि वचनमात्रेणैवाधिपत्यं सिध्यति तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति। शुक उवाच—कथमत्र निर्णयः। मयोक्तम्—संग्राम एव। राज्ञा विहस्योक्तम्—स्वस्वामिनं गत्वा सज्जीकुरु। मयोक्तम्—स्वदूतोऽपि प्रस्थाप्यताम्। राजोवाच—कः प्रयातु दौत्येन। एवंभूतो दूतः कार्यः।

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी।
ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान्॥ १९॥

गृध्रो वदति—सन्त्येव दूता बहवः। किं तु ब्राह्मण एव कर्तव्यः। यतः।

प्रसादं कुरुते पत्युः संपत्तिं नाभिवाञ्छति।
कालिमा कालकूटस्य नापैतीश्वरसङ्गमात्॥ २०॥

राजाह—ततः शुक एव व्रजतु। शुक त्वमेवानेन सह गत्वास्मदभिलषितं ब्रूहि। शुको ब्रूते—यथाज्ञापयति देवः। किंत्वयं दुर्जनो बकः। तदनेन सह न गच्छामि। तथा चोक्तम्—

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननो हरत्सीतां बन्धनं स्यान्महोदधेः॥ २१॥

अपरं च। न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन्गच्छंश्च वर्तकः॥ २२॥

राजोवाच—कथमेतत्। शुकः कथयति—

## ॥ कथा ४ ॥

अस्त्युज्जयिनीवर्त्मनि प्रान्तरे महान् पिप्पलीवृक्षः। तत्र हंसकाकौ निवसतः। कदाचिद् ग्रीष्मसमये परिश्रान्तः कश्चित्पथिकस्तत्र तरुतले धनुःकाण्डं सन्निधाय सुप्तः। क्षणान्तरे तन्मुखाद्वृक्षच्छायापगता। ततः सूर्यतेजसा तन्मुखं व्याप्तमवलोक्य कृपया तद्वृक्षस्थितेन हंसेन पक्षौ प्रसार्य पुनस्तन्मुखे छाया कृता। ततो निर्भरनिद्रासुखिना तेनाध्वन्येन मुखव्यादानं कृतम्। अथ परसुखमसहिष्णुः स्वभावदौर्जन्येन स काकस्तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितः। ततो यावदसौ पान्थ उत्थायोर्ध्वं निरीक्षते तावत्तेनावलोकितो हंसः काण्डेन हत्वा व्यापादितः। अतोऽहं ब्रवीमि—दुर्जनेन समं न स्थातव्यमिति[1]।

---

इति पूर्वत्रयोजनीयम्। गुणी—नीतिशास्त्रोक्तगुणसंपन्नः। प्रगल्भः—उचितवदने क्षमः। परमर्मज्ञः—परेषां शत्रूणां मर्म हृद्गतभावं जानातीति तथा। प्रतिभानवान्—प्रत्युत्पन्नमतिः। 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इत्युक्तप्रज्ञावान्। कालिमेति—यथा कालकूटस्य कालिमा ईश्वरसङ्गमादपि न नश्यति तथा शत्रुनृपतिसङ्गमादपि ब्राह्मणस्य धनादावनभिलाषो नापयाति। फलति—तस्य दुष्परिणामः साधून्बाधते इत्यर्थः। वर्तकः—पक्षिविशेषः। काकसङ्गात्—तेन सह तिष्ठन् हंसः हतः गच्छन् वर्तकः हतः इति योजना। प्रान्तरे—'प्रान्तरं दूरशून्योऽध्वा' इत्यमरः। अध्वन्येन—अध्वानं गच्छतीति अध्वन्यः पान्थः तेन। मुखव्यादानम्—वदनविस्तारः। काण्डेन—बाणेन।

---

1 अतःपरं—यतः।

त्यज दुर्जनसंसर्गं भज साधुसमागमम्।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम्॥ इत्यधिकं क्वचित्पुस्तके।

वर्तककथामपि कथयामि—

॥ कथा ५ ॥

एकदा सर्वे पक्षिणः भगवतो गरुडस्य यात्राप्रसङ्गेन समुद्रतीरं प्रचलिताः। तत्र काकेन सह वर्तकश्चालितः। अथ गच्छतो गोपालस्य मस्तकस्थितभाण्डाद्दधि वारंवारं तेन काकेन खाद्यते। ततो यावदसौ दधिभाण्डं भूमौ निधायोर्ध्वमवलोकते तावत्तेन काकवर्तकौ दृष्टौ। ततस्तेन खेदितः काकः पलायितः। वर्तको मन्दगतिस्तेन प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि—न स्थातव्यं न गन्तव्यम् इत्यादि॥ ततो मयोक्तम्—भ्रातः शुक किमेवं ब्रवीषि। मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि। शुकेनोक्तम्—अस्त्वेवम्। किंतु।

दुर्जनैरुच्यमानानि संस्मितानि प्रियाण्यपि।
अकालकुसुमानीव भयं संजनयन्ति हि॥ २३॥

दुर्जनत्वं च भवतो वाक्यादेव ज्ञातं यदनयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम्। पश्य।

प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति।
रथकारो निजां भार्यां सजारां शिरसाकरोत्॥ २४॥

राज्ञोक्तम्—कथमेतत्। शुकः कथयति—

॥ कथा ६ ॥

अस्ति यौवनश्रीनगरे मन्दमतिर्नाम रथकारः। स च स्वभार्यां बन्धकीं जानाति। किंतु जारेण समं स्वचक्षुषा नैकस्थाने पश्यति। ततोऽसौ रथकारः अहमन्यं ग्रामं गच्छामि इत्युक्त्वा चलितः। कियद्दूरं गत्वा निभृतं पुनरागत्य स्वगृहे खट्वातले स्थितः। अथ रथकारो ग्रामान्तरं गत इत्युपजातविश्वासया तद्वध्वा जारः संध्याकाल एवाहूतः। पश्चात्तेन समं तस्यां खट्वायां निर्भरं क्रीडन्ती खट्वातलस्थितेन तेन सहानुभूतकिंचिदङ्गसंस्पर्शात्स्वामिनं विज्ञाय सा विषण्णाभवत्। ततो जारेणोक्तम्—किमिति त्वमद्य मया सह निर्भरं न रमसे। विस्मितेव प्रतिभासि। अथ तयोक्तम्—अनभिज्ञोऽसि। योऽसौ मम प्राणेश्वरो येन ममाकौमारं सख्यं सोऽद्य ग्रामान्तरं गतः। तेन विना सकलजनपूर्णोऽप्ययं ग्रामो मां प्रत्यरण्यवत्प्रतिभाति। किं भावि तत्र परस्थाने किं खादितवान्कथं वा प्रसुप्त इत्यस्मद्धृदयं विदीर्यते। जारो ब्रूते—तत्किमेवंविधः स्नेहभूमिः स ते रथकारः। बन्धक्यवदत्—रे बर्बर किं ब्रवीषि। शृणु।

परुषाण्यपि चोक्ता या दृष्टा या क्रुद्धचक्षुषा।
सुप्रसन्नमुखी भर्तुः सा नारी धर्मभाजनम्॥ २५॥

---

खेदितः-तर्जितः। प्रियाणि श्रुतिसुखानि। अकालकुसुमानि-कालोत्पन्नानि कुसु०। शङ्का भयम्। 'शङ्का भयवितर्कयोः' इति यादवः। सान्त्वेन मधुरभाषणेन। 'अत्यर्थं मधुरं सान्त्वम्' इत्यमरः। बन्धकीं कुलटाम्। विषण्णा खिन्ना। विस्मिता पर्याकुला। परुषाणि रूक्षवचनानि। भर्त्रा परुषाण्युक्ता अपि क्रुद्धचक्षुषा दृष्टापि या भर्तुः सुप्रसन्नं प्रेम्णा प्रफुल्लं न तु कोपाकलुषं वदनं यस्याः तादृशी भवति सा। धर्मभाजनं पुण्यपात्रम्। सा उत्तमां गतिं लभते इति भावः।

---

१ अतः प्राक्—एका कथा स्थितेरियम्। द्वितीया गमनस्य। यथा—एकः काको वृक्षच्छायायाम् स्वपिति। वर्तकश्चाधस्ताद्भूमौ निवसति। इत्यधिकमे० पु०। २ स्वभावानिरपराधः इत्यधिकं—ए० पु०। ३ संमतानि इ० पा०। ४ वाग्व्यापारादेष प्रत्यक्षीकृतं मया इ० पा०। ५ स ते भर्ता कलहकारः इ० पा०

अपरं च । नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ २६ ॥

अन्यच्च । भर्ता हि परमं नार्या भूषणं भूषणैर्विना ।
एषा विरहिता तेन शोभनापि न शोभना¹ ॥ २७ ॥

त्वं जारो मनोलौल्यात्पुष्पताम्बूलसदृशः कदाचित्सेव्यसे² । स च स्वामी मां विक्रेतुं देवेभ्यो ब्राह्मणेभ्योऽपि वा दातुमीश्वरः³ । किं बहुना । तस्मिञ्जीवति जीवामि तन्मरणे चानुमरणं करिष्यामीत्येष मे निश्चयः⁴ । यतः ।

तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ २८ ॥

अन्यच्च । व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
तद्वद्भर्तारमादाय स्वर्गलोके⁵ महीयते ॥ २९ ॥

अपरं च । चितौ परिष्वज्य विचेतनं पतिं
प्रिया हि या मुञ्चति देहमात्मनः ।
कृत्वापि पापं शतसंख्यमप्यसौ
पतिं गृहीत्वा सुरलोकमाप्नुयात् ॥ ३० ॥

एतत्सर्वं श्रुत्वा स रथकारोऽवदत्—धन्योऽहं यस्येदृशी प्रियवादिनी स्वामिवत्सला⁶ भार्या इति मनसि निधाय तां खट्वां स्त्रीपुरुषसहितां मूर्ध्नि कृत्वा सानन्दं ननर्त । अतोऽहं ब्रवीमि—प्रत्यक्षेऽपि कृते दोषे इत्यादि ॥ ततोऽहं तेन राज्ञा यथाव्यवहारं संपूज्य प्रस्थापितः । शुकोऽपि मम पश्चादागच्छन्नास्ते । एतत्सर्वं परिज्ञाय यथाकर्तव्यमनुसंधीयताम् । चक्रवाको विहस्याह—देव बकेन तावद्देशान्तरमपि गत्वा यथाशक्ति राजकार्यमनुष्ठितम् । किंतु देव स्वभाव एष मूर्खाणाम् । यतः ।

शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् ।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य⁷ लक्षणम् ॥ ३१ ॥

राजाह—किमतीतोपालम्भनेन । प्रस्तुतमनुसंधीयताम् । चक्रवाको ब्रूते—देव विजने ब्रवीमि । यतः ।

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः ।
अप्यूहन्ति⁸ मनो धीरास्तस्माद्रहसि मन्त्रयेत् ॥ ३२ ॥

---

महोदयाः महान् उदयः सुखसंपत् येषु ते स्वर्गादयः । मनोलौल्यात्—मनसः चाञ्चल्यात् । पुष्पताम्बूलसदृशः—पुष्पमालाताम्बूलादीनि अनावश्यकानि तुच्छानि च विलासवस्तूनीव । अनुगच्छति—भर्तृमरणे अनुम्रियते । व्यालग्राही—व्यालं सर्पं गृह्णातीति व्यालग्राही आहितुण्डिकः । आदाय गृहीत्वा । स्वर्गं नीत्वेति यावत् । महीयते—पूज्यते । चितौ चितायाम् । यथाव्यवहारम्—उचिताचारानुरोधेन । न विवदेत्—कलहं न कुर्यात् । विज्ञस्य प्राज्ञस्य, पण्डितस्य । वर्णाकार०—वर्णः मुखरागः । आकारः—इङ्गितम् । 'आकारस्त्विङ्ग इङ्गितम्' इत्यमरः । ऊहन्ति तर्केण जानान्ति । विजने—रहसि । आतुरः श्रेयान्

---

१ शोभते इ० पा० । २ कदाचिन्न सेव्यसे च इ० अ० । ३ समर्थः इ० पा० । ४ इति प्रतिज्ञा वर्तते इ०पा० । ५ तेनैव सह मोदते इ० पा० । ६ सहजस्नेहवत्सला इ० पा० । ७ तत्स्यात् । ८ [illegible] मनः सुज्ञः इ० पा० ।

राजा मन्त्री च तत्र स्थितौ। अन्येऽन्यत्र गताः। चक्रवाको ब्रूते—देव अहमेवं जानामि। कस्याप्यस्मन्नियोगिनः प्रेरणया बकेनेदमनुष्ठितम्। यतः।

वैद्यानामातुरः श्रेयान्व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम्॥ ३३॥

राजाब्रवीत्—भवतु कारणमत्र पश्चान्निरूपणीयम्। संप्रति यत्कर्तव्यं तन्निरूप्यताम्। चक्रवाको ब्रूते— देव प्रणिधिस्तावत्तत्र यातु। ततस्तदनुष्ठानं बलाबलं च जानीमः। तथा हि।

भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने।
चारश्चक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः॥ ३४॥

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु। तेनासौ स्वयं तत्रावस्थाय द्वितीयं तत्रत्यमन्त्रकार्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयति। तथा चोक्तम्—

तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत्॥ ३५॥

गूढचारश्च यो जले स्थले चरति। ततोऽसावेव बको नियुज्यताम्। एतादृश एव कश्चिद्बको द्वितीयत्वेन प्रयातु। तद्गृहलोकश्च राजद्वारे तिष्ठतु। किंतु देव एतदपि सुगुप्तमनुष्ठातव्यम्। यतः।

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता॥ ३६॥

पश्य। मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः।
न शक्यास्ते समाधातुमिति नीतिविदां मतम्॥ ३७॥

राजा विमृश्योवाच—प्राप्तस्तावन्मयोत्तमः प्रणिधिः। मन्त्री ब्रूते—तदा सङ्ग्रामविजयोऽपि प्राप्तः।

अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच—देव जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति। राजा चक्रवाकमवलोकते। चक्रवाकेणोक्तम्—कृतावासे तावद्गत्वा

---

वैद्या अर्थलाभादातुरं बहु मन्यन्ते इति भावः। आतुरः रुग्णः। प्रणिधिः चारः। 'प्रणिधिः प्रार्थने चरे' इत्यमरः॥ अनुष्ठानं व्यवसायम्। चारः चक्षुः—अत्र कामन्दकः 'गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति च द्विजाः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥' इति। रामायणेपि- 'यस्मात्पश्यन्ति दूरस्थाः सर्वानर्थान्नराधिपाः। चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः॥' इति। तत्रत्यमन्त्रकार्यम्—परराष्ट्रीयमन्त्रणाव्यापारम्। सुनिभृतं सुगुप्तम्। निश्चित्य- —अवधार्य। तपस्वि०—तपस्विनां व्यञ्जनं लक्षणं वेष इति यावत् तेन उपेतैः। वर्णिलिङ्गिभिः इत्यर्थः। 'स वर्णिलिङ्गी विदितः समाययौ' इति किरातार्जुनीये। संवदेत् मन्त्रयेत्। अत्र कामन्दकः—'चारान्विचारयेत्तीर्थे आत्मनश्च परस्य च। पाषण्डादीनविज्ञातानन्योन्यमितरैरपि॥' इति। गूढचारः गूढः चारः यस्य सः गुप्तचरः। तद्गृहलोकः—तयोः बकयोः परिवारः। तिष्ठतु प्रतिभूत्वेन वर्तताम्। षट्कर्णः षट्कर्णो यस्य तृतीयपुरुषगामीत्यर्थः। वार्तया प्राप्तः—बहुजनश्रुतिविषयीभूतः। दोषाः अनर्थाः अनिष्टानि। समाधातुम् प्रतिकर्तुम्। चक्रवाकमवलोकते—कर्तव्यनिर्देशापेक्षया तन्मुखं पश्यतीत्यर्थः। कृतावासे—प्रणिध्यर्थं निर्मिते गृहे।



१ सद्वन्द्वो नृपतेर्जनः इ० पा०।

भवतु । पश्चादानीय द्रष्टव्यः । प्रतीहारस्तमावासस्थानं नीत्वा गतः । राजाह–विग्रहस्तावदुपस्थितः । चक्रवाको ब्रूते—देव तथापि सहसा विग्रहो न विधिः । यतः ।

सचिवः किं स मन्त्री वा य आदावेव भूपतिम् ।
युद्धोद्योगं स्वभृत्यागं निर्दिशत्यविचारितम् ॥ ३८ ॥

अपरं च । विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ।
अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः ॥ ३९ ॥

अन्यच्च । साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
साधितुं प्रयतेतारीन्न युद्धेन कदाचन ॥ ४० ॥

यतः । सर्व एव जनः शूरो ह्यनासादितविग्रहः ।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्न हि ॥ ४१ ॥

किं च । न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा ।
अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ ४२ ॥

किंतु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम् । यतः ।

यथा[2] कालकृतोद्योगात्कृषिः फलवती भवेत् ।
तद्वन्नीतिरियं देव चिरात्फलति न क्षणात् ॥ ४३ ॥

अपरं च । महतो दूरभीरुत्वमासन्ने शूरता गुणः ।
विपत्तौ च महाँल्लोके धीरतामनुगच्छति ॥ ४४ ॥

अन्यच्च । प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल ।
अतिशीतलमप्यम्भः किं भिनत्ति न भूभृतः ॥ ४५ ॥

विशेषतश्च देव महाबलोऽसौ चित्रवर्णो राजा । यतः ।

बलिना सह योद्धव्यमिति नास्ति[3] निदर्शनम् ।
तद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत्[4] ॥ ४६ ॥

---

निर्दिशति—उपदिशति । अविचारितम्–अविचार्य । श्लो. ३९–४० मनु. अ. सप्त. श्लो. १९८–९९ द्रष्टव्यौ । साम्ना–प्रियवचनादिना क्रोधोपशमनं साम । तच्च पञ्चविधम् । तदुक्तम्—'परस्परोपकाराणां दर्शनं गुणकीर्तनम् । संबन्धस्य समाख्यानमायत्याः संप्रकाशनम् । वाचा पेशलया साधु तवाहमिति चार्पणम् । इति सामविधानज्ञैः साम पञ्चविधं स्मृतम् ॥' दानमपि पञ्चविधम् । तदुक्तम्—'प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम् । द्रव्यादानमपूर्वं च स्वयं ग्राहप्रवर्तनम् । देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥' भेदः–शत्रोरमात्यादीनामुपायेन परतो विश्लिष्यात्मसात्करणं भेदः । स त्रिविधः 'स्नेहरागापनयनं संहर्षोत्पादनं तथा । संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥' साधितुम्–वशीकर्तुम् । सर्व एव०–अप्रवृत्ते समरे सर्व एव आत्मनः शौर्यं प्रस्तौतीति भावः । दारुणा यथा–यथा ग्रावा दारुणा उत्तोलनदण्डेन सहायेन सुखेनैव उत्थाप्यते तथा प्राणिभिः केवलया शक्त्या न उत्थाप्यते इत्यर्थः । दूरभीरुत्वम्–महान् यावद्भयमनागतं तावद्बिभेतीति भावः । आसन्ने भयोपस्थितौ । मित्रलाभे ५७ श्लो. द्रष्टव्यः । उत्तापः–चित्तसंक्षोभजनिता नैसर्गिकधैर्यच्युतिरित्यर्थः । भूभृतः—पर्वतान् । अतिशीतलमि०–शान्तचित्ततया व्यवहरता विजयः सुखं लभ्यते इति भावः । निदर्शनम्–नीतिशा-

---

१ स किं भृत्यः स किं मन्त्री इ० पा० । २ यथाकालं कृता यत्नात् इ० पा० । ३ न युद्धम् । ४ पादयुद्धवत् इ० पा० ।

अन्यच्च । स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते ।
कलिर्बलवता सार्धं कीटपक्षोद्गमो यथा ॥ ४७ ॥
किं च । कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत् ।
प्राप्तकाले तु नीतिज्ञ उत्तिष्ठेत्क्रूरसर्पवत् ॥ ४८ ॥
शृणु देव । महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः ।
समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ ४९ ॥
अतस्तद्दूतोऽयं शुकोऽत्राश्वास्य तावद्ध्रियतां यावद्दुर्गं सज्जीक्रियते । यतः ।
एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं शतसहस्राणि तस्माद् दुर्गं विधीयते ॥ ५० ॥
अदुर्गो विषयः कस्य नारेः परिभवास्पदम् ।
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ५१ ॥
दुर्गं कुर्यान्महाखातमुच्चप्राकारसंयुतम् ।
सयन्त्रं सजलं शैलसरिन्मरुवनाश्रमम् ॥ ५२ ॥
विस्तीर्णतातिवैषम्यं रसधान्येध्मसंग्रहः ।
प्रवेशश्चापसारश्च सप्तैता दुर्गसंपदः ॥ ५३ ॥
राजाह—दुर्गानुसंधाने को नियुज्यताम् । चक्रो ब्रूते—
यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् ।
कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ ५४ ॥
तदाहूयतां सारसः । तथानुष्ठिते सत्यागतं सारसमालोक्य राजोवाच—भोः सारस त्वं सत्वरं दुर्गमनुसंधेहि । सारसः प्रणम्योवाच—देव दुर्गं तावदिदमेव चिरात्सु-निरूपितमास्ते महत्सरः । किंत्वत्र मध्यवर्तिद्वीपे द्रव्यसंग्रहः कार्यताम् । यतः ।
धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ ५५ ॥

---

स्त्राज्ञा । तदिति–यन्नराणां...तत् । अपकर्तरि वर्तते–अपकर्तरि शत्रौ विषये वर्तते अभियोगं कुरुते । युद्धोद्योगे प्रवर्तते इत्यर्थः । कीटपक्षोद्गमः–कीटस्य पिपीलिकादेः पक्षोद्गमः यथा तन्नाशाय भवति तथा । पक्षोद्यम इति पाठे स यथा अकिंचित्करस्तथा इत्यर्थः । एक इति–मनुः ७. ७४ । विधीयते–कर्तव्यतया उपदिश्यते । दुर्गविधाने च मनुः–' धनुर्दुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥' इति । कस्यारेः-पंचम्यर्थे षष्ठी । राज्ञो विषयः अदुर्गः स्याच्चेत् कस्मात् शत्रोः तस्य पराभवः न स्यात् । यद्वा कस्य विषयः इति योजना । तदेव स्पष्टयति अदुर्गः राजा पोतच्युतमनुष्यवद् अनाश्रयः निरालम्बः म्रियते इत्यर्थः । महाखातम्–महत् खातं परिखा यस्य । प्राकारः–प्रान्तो भित्तिः । सयन्त्रम्–शत्रुपीडनार्थमिति भावः । मरुवन०–जलादिहीनप्रदेशनिविष्टं येन शत्रुः सामग्रीं न लभेत इति भावः । अतिवैषम्यम्–भूमेः नतोन्नतता । रस०–रसः जलम् । 'रसो गन्धे रसे जले ' इति मेदिनी । इध्मानि–काष्ठानि । प्रवेश इ० । प्रवेशनिर्गममार्गाः । दुर्गानुसन्धाने–सज्जीकरणावेक्षणे । अदृष्टकर्मा–अज्ञातविधानः स्वयमकृतकार्यः । विमुह्यति–मोहमापद्यते । तस्य बुद्धिस्तस्मिन्कार्ये सम्यङ् न स्फुरति । निक्षिप्तमिति–रत्नं द्रव्यमित्यर्थः । केवलं कोषसंवर्धनं न कार्यकरमिति भावः ।

---

१ उद्यमो–द्गमो–पमः इ० पा० । २ कालस्तु. ३ विशिष्यते. ४ निक्षिप्तो हि मुखे दण्डः, रत्नं द्रव्यम्.

किं च । ख्यातः सर्वरसानां हि लवणो रस उत्तमः ।
गृहीतं च विना तेन व्यञ्जनं गोमयायते ॥ ५६ ॥

राजाह—सत्वरं गत्वा सर्वमनुतिष्ठ । पुनः प्रविश्य प्रतीहारो ब्रूते—देव सिंहलद्वीपादागतो मेघवर्णो नाम वायसराजः सपरिवारो द्वारि तिष्ठति । देवपादं द्रष्टुमिच्छति । राजाह—काकः पुनः सर्वज्ञो बहुद्रष्टा च । तद्भवति संग्राह्यः । चक्रो ब्रूते—देव अस्त्येवम् । किंतु काकः स्थलचरः । तेनास्मद्विपक्षपक्षे नियुक्तः कथं संग्राह्यः । तथा चोक्तम्—

आत्मपक्षं परित्यज्य परपक्षेषु यो रतः ।
स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥ ५७ ॥

राजोवाच—कथमेतत् । मन्त्री कथयति—

## ॥ कथा ७ ॥

अस्त्यरण्ये कश्चिच्छृगालः स्वेच्छया नगरोपान्ते भ्राम्यन्नीलीभाण्डे पतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृतवत्संदर्श्य स्थितः । अथ नीलीभाण्डस्वामिना मृत इति ज्ञात्वा तस्मात्समुत्थाप्य दूरे नीत्वापसारितस्तस्मात्पलायितः । ततोऽसौ वनं गत्वा स्वकीयमात्मानं नीलवर्णमवलोक्याचिन्तयत्—अहमिदानीमुत्तमवर्णः । तदाहं स्वकीयोत्कर्षं किं न साधयामि । इत्यालोच्य शृगालानाहूय तेनोक्तम्—अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः । तदद्यारभ्यारण्येऽस्मदाज्ञया व्यवहारः कार्यः । शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपातं प्रणम्योचुः—यथाज्ञापयति देव इति अनेनैव क्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन स्वज्ञातिभिरावृतेनाधिक्यं साधितम् । ततस्तेन व्याघ्रसिंहादीनुत्तमपरिजनान्प्राप्य सदसि शृगालानवलोक्य लज्जमानेनावज्ञया दूरीकृताः स्वज्ञातीयाः । ततो विषण्णाञ्शृगालानवलोक्य केनचिद्वृद्धशृगालेनैतत्प्रतिज्ञातम्—मा विषीदत । यदनेनानभिज्ञेन नीतिविदो मर्मज्ञा वयं स्वसमीपात्परिभूतास्तद्यथायं नश्यति तथा विधेयम् । यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानमिमं मन्यन्ते । तद्यथायं परिचितो भवति तथा कुरुत । तत्र चैवमनुष्ठेयम् । यत्सर्वे संध्यासमये तत्संनिधाने महारावमेकदैव करिष्यथ । ततस्तं शब्दमाकर्ण्य जातिस्वभावात्तेनापि शब्दः कर्तव्यः । यतः ।

यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ ५८ ॥

ततः शब्दादभिज्ञाय स व्याघ्रेण हन्तव्यः । ततस्तथानुष्ठिते सति तद्वृत्तम् । तथा चोक्तम्—

---

गृहीतमिति—गृह्णीयात्त्विति पाठे तस्य संग्रहं कुर्यात् यतः तं विना इत्यर्थः । उत्तमवर्णः—स्वभावापेक्षया सुन्दरवर्णः । स्वज्ञातिभिरावृतेन—तत्कृतसाहाय्येन इत्यर्थः । आधिक्यं प्रकर्षः । अनभिज्ञेन आत्मनो हितमजानता । परिभूताः—अवज्ञाताः । सतिरस्कारं दूरीकृता इत्यर्थः । वर्णमात्रविप्रलब्धाः—वर्ण एव वर्णमात्रं तेन प्रतारिताः । यः स्वभावः इत्यादि—'अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ।' इति भावः । छिद्रम्—रन्ध्रं, न्यूनता । छिद्रस्यावश्यगोपने मनुः, 'नास्य छिद्रं परो विद्याद्विद्या-

---

१ गृह्णीयात्तु । इ० पा० । २ स्वपक्षपरिच्युतः प्रणमति । ३ सुज्ञः. ४ आत्मपक्षपरित्यागात् इ० पा० । ५ चेदनेनानीतिज्ञेन वयं मर्मज्ञा परिभूतास्तद्यथायं नश्यति तन्मया विधेयम् इ० पा० । ६ यस्य स्यात्तस्यासौ दुरतिक्रमः इ० पा० ।

छिद्रं मर्म च वीर्यं च सर्वं वेत्ति निजो रिपुः ।
दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः ॥ ५९ ॥

अतोऽहं ब्रवीमि—आत्मपक्षं परित्यज्य इत्यादि । राजाह—यद्येवं तथापि दृश्यतां तावदयं दूरादागतः । तत्संग्रहे विचारः कार्यः । चक्रो ब्रूते—देव प्रणिधिः प्रहितो दुर्गश्च सज्जीकृतः । अतः शुकोऽप्यालोक्य प्रस्थाप्यताम् । किं तु ।

नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः ।
तच्छूरान्तरितं दूतं पश्येद्धीरसमन्वितः ॥ ६० ॥

ततः सभां कृत्वाहूतः शुकः काकश्च । शुकः किंचिदुन्नतशिरा दत्तासन उपविश्य ब्रूते—भो हिरण्यगर्भ त्वां महाराजाधिराजः श्रीमच्चित्रवर्णः समाज्ञापयति । यदि जीवितेन श्रिया वा प्रयोजनमस्ति तदा सत्वरमागत्यास्मच्चरणौ प्रणम । नो चेदवस्थातुं स्थानान्तरं चिन्तय । राजा सकोपमाह—आः सभायां कोऽप्यस्माकं नास्ति य एनं गलहस्तयति । उत्थाय मेघवर्णो ब्रूते—देव आज्ञापय । हन्मि दुष्टं शुकम् । सर्वज्ञो राजानं काकं च सान्त्वयन्ब्रूते—शृणु तावत् ।

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति सत्यं न तद्यच्छलमभ्युपैति ॥ ६१ ॥

यतो धर्मश्चैषः । दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥ ६२ ॥

अपरं च । स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः ।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति ॥ ६३ ॥

ततो राजा काकश्च स्वां प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चलितः । पश्चाच्चक्रवाकेणानीय प्रबोध्य कनकालंकारादिकं दत्त्वा संप्रेषितो ययौ । शुको विन्ध्याचलं गत्वा राजानं प्रणतवान् । तमालोक्य चित्रवर्णो राजाह—शुक का वार्ता । कीदृशोऽसौ देशः । शुको ब्रूते—देव संक्षेपादियं वार्ता संप्रति युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशैः कथं वर्णयितुं शक्यते । ततः सर्वाञ्शिष्टानाहूय राजा मन्त्रयितुमुपविष्टः । आह च—संप्रति कर्तव्यविग्रहे यथाकर्तव्यमुपदेशं ब्रूत । विग्रहः पुनरवश्यं कर्तव्यः । तथा चोक्तम्—

असंतुष्टा द्विजा नष्टा संतुष्टाश्च महीभुजः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ६४ ॥

---

छिद्रं परस्य तु । गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ इति । आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन्रिपून् । इति रघुवंशेपि । मर्म—रहस्यम् । निजो रिपुः—सजातीयः स्वपक्षान्तर्गतो वा शत्रुः । चाणक्यः— तन्नामा ब्राह्मणः चन्द्रगुप्तस्यामात्यः । तीक्ष्णदूत०—प्राणहरस्य दूतस्य प्रयोगतः विषकन्याप्रयोगेण इति यावत् । शूरान्तरितम् । दूतविशेषणं क्रियाविशेषणं वेदम् । धीरसमन्वितः—नीतिकुशलैः सहेत्यर्थः । गलहस्तयति—गलहस्तं दत्वा निष्कासयति । छलमभ्युपैति—कपटमाश्रयते । यत्कपटेन संकीर्यते इत्यर्थः । भयमिति पाठे प्रकाशशङ्कामित्यर्थः । प्रकृतिम्—स्वाभाविकमनःस्वास्थ्यम् । आपन्नौ प्राप्तौ । प्रबोध्य—सर्वं वृत्तान्तं यथावदवगमय्य, तं सान्त्वयित्वा इत्यर्थः । नष्टाः—

---

१. तद्दूरान्तरितम् इ० । वीरसमन्वितः इ० च पा० । २ भयम् इ० पा० । ३ राजा च द्वितीयः स्वर्गो[illegible] इत्यधिकं क्वचित्

दूरदर्शी नाम गृध्रो ब्रूते—देव व्यसनितया विग्रहो न विधिः । यतः ।

मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः ।
शत्रूणां विपरीताश्च कर्तव्यो विग्रहस्तदा ॥ ६५ ॥

अन्यच्च । भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम् ।
यदैतन्निश्चितं भावि कर्तव्यो विग्रहस्तदा ॥ ६६ ॥

राजाह—मम बलानि तावदवलोकयतु मन्त्री । तदैतेषामुपयोगो ज्ञायताम् । एवमाहूयतां मौहूर्तिकः । निर्णीय शुभलग्नं यात्रार्थं ददातु । मन्त्री ब्रूते—तथापि सहसा यात्राकरणमनुचितम् । यतः ।

विशन्ति सहसा मूढा ये विचार्य द्विषद्बलम् ।
खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम् ॥ ६७ ॥

राजाह–मन्त्रिन् ममोत्साहभङ्गं सर्वथा मा कृथाः। विजिगीषुर्यथा परभूमिमाक्रामति तथा कथय।गृध्रो ब्रूते—तत्कथयामि।किं तु तदनुष्ठितमेव फलप्रदम्।तथा चोक्तम्—

किं मन्त्रेणाननुष्ठाने शास्त्रवत्पृथिवीपतेः ।
न ह्यौषधपरिज्ञानाद्व्याधेः शान्तिः क्वचिद्भवेत् ॥ ६८ ॥

राजादेशश्चानतिक्रमणीय इति यथाश्रुतं निवेदयामि । शृणु ।

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप ।
तत्र तत्र च सेनानीर्यायाद्व्यूहीकृतैर्बलैः ॥ ६९ ॥
बलाध्यक्षः पुरो यायात्प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलम् ॥ ७० ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वयोर्नागा नागानां च पदातयः ॥ ७१ ॥
पश्चात्सेनापतिर्यायात्खिन्नानाश्वासयञ्छनैः ।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृप ॥ ७२ ॥

---

नाशं यान्ति असुखभागिनो भवन्ति इत्यर्थः । व्यसनितया—व्यसनमस्यास्तीति व्यसनी तस्य भावः तत्ता तया । व्यसनाभिभूतैः इति यावत् । शत्रूणां विपरीताः–तेषु अदृढभक्तयः । अरक्ता वा सुखभेद्या इत्यर्थः । त्रयम्—एतत् त्रयं विग्रहस्य फलम् । यदैतन्नियतं भावि तदा विग्रहमाचरेत् इति कामन्दकनीतिसारे द्वितीयचरणस्य पाठः । मौहूर्तिकः— मुहूर्तं अधिकृत्य कृतं ग्रन्थं अधीते इति । मुहूर्तज्ञः—ज्यौतिषिकः । शुभलग्नं–शुभं शुभफलप्रदं लग्नं राशीनां उदयः । यात्रार्थम्—अभियानार्थम् । विजिगीषुः—विजेतुमिच्छुः । अननुष्ठाने अकरणे सति पृथिवीपतेः मन्त्रेण किं कोऽर्थः शास्त्रवत् । यथा प्रयोगं विना केवलं शास्त्रज्ञानम् अकिंचित्करं तथा केवलमन्त्रणया राज्ञां कार्यं न सिध्यतीत्यर्थः । यद्वा शास्त्रवत् यथाशास्त्रमुक्तेन मन्त्रेण किं इति शास्त्रवदननुष्ठाने किमिति वा योज्यम् । व्यूहीकृतैर्बलैः–बलानि व्यूहीकृत्य इत्यर्थः । व्यूहः–सेनाविन्यासः । व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः । इति मेदिनी । एतेषां भूयांसः श्लोकाः कामन्दकनीतिशास्त्रादुद्धृताः । बलाध्यक्षः–तत्तत्सेनाविभागस्याध्यक्षः । कलत्रम्–स्त्रीवर्गः । फल्गु–क्षीणसत्त्वं, निरर्थकः जनसमुदायश्च । नागानां च पदातयः इत्यत्र चाटवीबलम् इति कामन्दकोक्तः पाठः । खिन्नान्—श्रान्तान् सैनिकान् । आश्वासयन्—प्रोत्साहयन् । विषमं इ०—प्रदेशं इति

---

१ मित्रौघाः पीडिता अपि, मित्रसामन्तसचिवाः, इ० पा० । २ किं वर्तनदानमेव इ० पा० । ३ प्रतिव्यूह्य इ० पा० ।

समेयाद्विषमं नागैर्जलाढ्यं समहीधरम् ।
सममश्वैर्जलं नौभिः सर्वत्रैव पदातिभिः ॥ ७३ ॥

हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे ।
तदन्यत्र तुरङ्गाणां पत्तीनां सर्वदैव हि ॥ ७४ ॥

शैलेषु दुर्गमार्गेषु विधेयं नृपरक्षणम् ।
सुयोधै रक्षितस्यापि शयनं योगनिद्रया ॥ ७५ ॥

नाशयेत्कर्षयेच्छत्रून्दुर्गकण्टकमर्दनैः ।
परदेशप्रवेशे च कुर्यादाटविकान्पुरः ॥ ७६ ॥

यत्र राजा तत्र कोषो विना कोषान्न राजता ।
स्वभृत्येभ्यस्ततो दद्यात्को हि दातुर्न युध्यते ॥ ७७ ॥

यतः । न नरस्य नरो दासो दासस्त्वर्थस्य भूपते ।
गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ७८ ॥

अभेदेन च युध्येरन् रक्षेयुश्च परस्परम् ।
फल्गु सैन्यं च यत्किंचिन्मध्ये व्यूहस्य कारयेत् ॥ ७९ ॥

पदातींश्च महीपालः पुरोऽनीकस्य योजयेत् ।
उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ॥ ८० ॥

स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ ८१ ॥

दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ।
भिन्द्याच्चैव तडागानि प्राकारान्परिखास्तथा ॥ ८२ ॥

बलेषु प्रमुखो हस्ती न तथान्यो महीपतेः ।
निजैरवयवैरेव मातङ्गोऽष्टायुधः स्मृतः ॥ ८३ ॥

बलमश्वश्च सैन्यानां प्राकारो जङ्गमो यतः ।
तस्मादश्वाधिको राजा विजयी स्थलविग्रहे ॥ ८४ ॥

तथा चोक्तम्—युध्यमाना हयारूढा देवानामपि दुर्जयाः ।
अपि दूरस्थितास्तेषां वैरिणो हस्तवर्तिनः ॥ ८५ ॥

प्रथमं युद्धकारित्वं समस्तबलपालनम् ।
दिङ्मार्गाणां विशोधित्वं पत्तिकर्म प्रचक्षते ॥ ८६ ॥

---

शेषः । हस्तिनां—गजसैनिकानाम् । शयनं योगनिद्रया—अर्धप्रबोधयुक्तनिद्रा योगनिद्रा तया । नृपः सुप्तोपि सावधानं वर्तेत इति भावः । कर्षयेत्—क्लेशयेत् । दुर्गकण्टकमर्दनैः—दुर्गकण्टकेषु संकटमार्गेषु मर्दनैः नाशनैः । को हि दातुर्न युध्यते—यः नृपः द्रव्यदानेन सुयोधान् तोषयति तदर्थं को न युध्यते । सर्व एव युध्यते इति भावः । अत्र बृहस्पतिः—नियुक्तः कर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान्धनैर्मानयंस्तु नवोप्यक्षोभ्यतां व्रजेत् ॥ इति । धनाधननिबन्धनम्—धनाधननिष्ठम् । अभेदेन—ऐक्येन, परस्परावियोगेन । अनीकस्य—सैन्यस्य । अनीकं तु रणे सैन्ये इति विश्वः । उपरुध्य—शत्रुनगरावरोधं कृत्वा । अनूपे जलप्रायदेशे । अनूपो महिषे नाम्बुप्रायदेशे तु वाच्यवत् । इति मेदिनी । दूषयेत्—नाशयेत्, अनुपयोगि वा कुर्यात् । यवसः—घासः । बलमश्वश्च—अश्वः सैन्यानां बलं मुख्याधारः यतः जंगमः प्राकारः । युद्धकारित्वं—योधकर्मत्वम् । युद्धेन

स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम् ।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ८७ ॥
यथा प्रभुकृतान्मानाद्युध्यन्ते भुवि मानवाः ।
न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ ८८ ॥
वरमल्पबलं सारं न कुर्यान्मुण्डमण्डलीम् ।
कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ८९ ॥
अप्रसादोऽनधिष्ठानं देयांशहरणं च यत् ।
कालयापोऽप्रतीकारस्तद्वैराग्यस्य कारणम् ॥ ९० ॥
अपीडयन्बलं शत्रूञ्जिगीषुरभिषेणयेत् ।
सुखसाध्यं द्विषां सैन्यं दीर्घयानप्रपीडितम् ॥ ९१ ॥
दायादादपरो मन्त्रो नास्ति भेदकरो द्विषाम् ।
तस्मादुत्थापयेद्यत्नाद्दायादं तस्य विद्विषः ॥ ९२ ॥
संधाय युवराजेन यदि वा मुख्यमन्त्रिणा ।
अन्तः प्रकोपनं कार्यमभियोक्तुः स्थिरात्मनः ॥ ९३ ॥
क्रूरं मित्रं रणे चापि भङ्गं दत्वाभिघातयेत् ।
अथ वा गोग्रहाकृष्ट्या तन्मुख्याश्रितबन्धनात् ॥ ९४ ॥

---

शत्रुनिरोध इत्यर्थः । अविरक्तं—स्वस्वामिनि दृढभक्तिमत् । वरमिति—सारं शौर्यधैर्यादि-गुणवत् अल्पबलं क्षुद्रसंख्याकमपि बलं वरं । मुण्डमुण्डली शिरःपरम्परा केवलं संख्यापूरका नरा इति यावत् । भङ्गः—पराजयः पलायनं वा । स्फुटम्—स्पष्टं, असंशयम् । हि—हेतौ निश्चये वा । अप्रसादः—प्रसादकरणवैमुख्यं, अपुरस्कारदानमित्यर्थः । अनधिष्ठानम्—बल-विभागादीनामध्यक्षादिपदालाभः, अधिकारपदात् च्युतिर्वा । देयांशहरणं—देयस्य दानोचितस्य अंशस्य लोप्त्रांशस्य हरणं आदानमात्मसात्करणमित्यर्थः । कालयापः—अनि-योगेन वृथा कालक्षेपः । अप्रतीकारः—कृतमानभङ्गादेरनिर्यातनं, अपकाराशोधनम् । वैरा-ग्यस्य—सैनिकानामिति शेषः । अपीडयन् इ०—आत्मनः सैन्यं दीर्घप्रयाणादिना अपीडयन् अक्लेशयन् । शत्रून् अभिषेणयेत्, अभिद्रवेत्, अभियानेन पीडयेदिति यावत् । यतः दीर्घयानप्रपीडितं—दूराक्रमणखिन्नं बलं शत्रूणां सुखसाध्यमनायासेन जय्यम् । अतिश्रमेण क्षीणबलस्य सैन्यस्य पराभवः सुलभ इति भावः । अत्र मनुः—'यदा मन्येत भावेन हृष्टपुष्टबलं स्वकम् । परस्य विपरीतं चेत्तदा यायादरीन्प्रति ॥ यदा च स्यात्परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥' इति ॥ दायादात्—दायं पैतृकधनस्य विभागं गृह्णातीति दायादः सगोत्रः । भेदकरो मन्त्रो नास्ति—दायाद एव शत्रुगृहविच्छेदे मुख्यं साधनमित्यर्थः । अतः दायादोत्तेजनं कार्यमित्याह—तस्मादिति । युवराजेन अराति-नृपपुत्रेण इति यावत् । मुख्यमन्त्रिणा-शत्रोरिति शेषः । अन्तःप्रकोपनं-गृहकलिः । अभियोक्तुः—स्थिरात्मनः । तृतीयार्थे षष्ठी । धीरचेतसा अभियोक्तृशत्रुगृहे अन्तर्भेदः प्रकृतिव्याकोपो वा कार्यः । क्रूरमिति—अपि च रणे क्रूरं प्रमाथि मित्रं शत्रोरिति शेषः भङ्गं दत्त्वा समरभूमेः पलायनं कृत्वाभिघातयेत । पराभूता एते इति विश्वस्य प्रमाद्यन्तं तं सर्वतोवस्कद्य घातयेदित्यर्थः । अथ वा गवां ग्रहः गोग्रहस्तेन या आक्राष्टिस्तया । अथवेत्यनुवर्तनीयम् । तस्य ये मुख्याः

---

१ ग्रहणं इ० पा०. २ न ह्यस्याकर्षणो द्विषाम् इ० पा० । ३ [illegible] इ० पा० ।

स्वराज्यं वासयेद्राजा परदेशापवाहनात् ।
अथ वा दानमानाभ्यां वासितं धनदं हि तत् ॥ ९५ ॥

राजाह—आः किं बहुनोदितेन ।

आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ९६ ॥

मन्त्रिणा विहस्योक्तम्—सर्वं सत्यमेतत् । किं तु ।

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ९७ ॥

तत उत्थाय राजा मौहूर्तिकावेदितलग्ने प्रस्थितः ।

अथ प्रणिधिप्रहितश्चरो हिरण्यगर्भमागत्योवाच–देव समागतप्रायो राजा चित्रवर्णः । संप्रति मलयपर्वताधित्यकायां समावासितकटको वर्तते । दुर्गशोधनं प्रतिक्षणमनुसंधातव्यं यतोऽसौ गृध्रो महामन्त्री । किंच केनचित्सह तस्य विश्वासकथाप्रसङ्गेनैव तदिङ्गितमवगतं मया यदनेन कोऽप्यस्मद्दुर्गे प्रागेव नियुक्तः । चक्रो ब्रूते—देव काक एवासौ संभवति । राजाह—न कदाचिदेतत् । यद्येवं तदा कथं

---

प्रधानपुरुषाः आश्रिताः सेवकाश्च तेषां बन्धनात् तद्घातयेत् । यदरेर्मित्रं भेदाक्षमं तत्पक्षपाताच्च समर्थं शूरपराक्रमं तज्जेतुं सर्वथा प्रयतितव्यमिति भावः । राजा परदेशापवाहनात् शत्रोर्देशस्य अपवाहनात्तस्माद्बन्दिभावेन प्रजाः आनीय अथवा दानमानाभ्यां धनदानेन सत्कारेण च आनीय स्वराज्यं वासयेत्—स्वराज्ये निवेशयेत् । हि यतः तथा वासितं वृद्धप्रजं राज्यं धनदं समृद्धिकरम् । आत्मोदय इति—आत्मन उदयो वृद्धिः । परस्य शत्रोर्ज्यानिर्हानिः । 'वीज्याहाज्वरिभ्यो निः' इत्यौणादिको निः प्रत्ययः । इति द्वयम् । इदं परिमाणमस्या इति इयती एतावती । 'किमिदंभ्यां वो घः' इति वतुपो वस्य घश्च । 'उगितश्च' इति ङीप् । नीतिर्नीतिसंग्रहः । एतद्द्वयातिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः । यदन्यत्षाड्गुण्यादिवर्णनं तत्सर्वमस्यैव प्रपञ्च इत्याह—तदिति । तद्द्वयमूरीकृत्याङ्गीकृत्य । 'ऊरीकृतमुररीकृतम्' इत्यमरः । 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति समासे क्त्वो ल्यप् । कृतिभिः कुशलैः वाचस्पत्यं वाग्मित्वम् । कस्कादित्वादलुक्सत्वे । 'षष्ठ्याः पतिपुत्र—' इत्यादिना सत्वमिति स्वामी । तन्न । तस्य छन्दोविषयत्वात् । ब्राह्मणादित्वाद्भावे ष्यञ्प्रत्ययः । प्रतायते विस्तार्यते । कर्मणि लट् । 'तनोतेर्यकि' इत्यात्वम् । तस्मादात्मोदयार्थिभिरविलम्बाच्छत्रुरुच्छेत्तव्यः । तत्रान्तरीयत्वात्तस्येति भावः इति । अन्यदिति-अन्यदुच्छृङ्खलमनर्गलं प्रसह्य । पीडनक्षममिति भावः । सत्त्वं बलमन्यत् । शास्त्रेण—मन्वादिशास्त्रेण नियन्त्रितमुदाहृतं परव्यसनकाले निर्मितं सत्त्वमन्यत् । उत्कटानुत्कटलक्षणवैलक्षण्यमन्यशब्दार्थः । तयोः सापेक्षत्वानिरपेक्षत्वाभ्यां मिथो विरोधान्नैकशास्त्रत्वं संभवतीत्यर्थः । अत्र दृष्टान्तमाह—तेजस्तिमिरयोः समानमधिकरणं ययोस्तयोर्भावः सामानाधिकरण्यमेकाश्रयत्वं कुतः । न कुताश्चित् । तयोः सहावस्थानविरोधादिति भावः । तस्मादुभयोरुदितानुदितहोमवद्भिन्नविषयत्वादितरेतरशास्त्रविरोधो न बाधक इति भावः । इति च शिशुपालवधटीकायां मल्लिनाथः । समावासितकटकः—निवेशितसैन्यः । दुर्गशोधनम्—दुर्गनिरूपणम् । अभिप्राय—नियुक्तार्थम् । वर्तनम्—

तेन शुकस्याभिभवायोद्योगः कृतः । अपरं च । शुकस्य गमनोत्तम विग्रहोत्साहः। स चिरादत्रास्ते । मन्त्री ब्रूते—तथाप्यागन्तुः शङ्कनीयः । राजाह आगन्तुका अपि कदाचिदुपकारका दृश्यन्ते । शृणु ।

> परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः ।
> अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ९८ ॥

अपरं च ।

> आसीद्वीरवरो नाम शूद्रकस्य महीभृतः ।
> सेवकः स्वल्पकालेन स ददौ सुतमात्मनः ॥ ९९ ॥

चक्रः पृच्छति—कथमेतत् । राजा कथयति—

॥ कथा ८ ॥

अहं पुरा शूद्रकस्य राज्ञः क्रीडासरसि कर्पूरकेलिनाम्नो राजहंसस्य पुत्र्या कर्पूरमञ्जर्या सहानुरागवानभवम् । तत्र वीरवरो नाम राजपुत्रः कुतश्चिद्देशादागत्य राजद्वारमुपगम्य प्रतीहारमुवाच-अहं तावद्वर्तनार्थी राजपुत्रः राजदर्शनं कारय । ततस्तेनासौ राजदर्शनं कारितो ब्रूते—देव यदि मया सेवकेन प्रयोजनमस्ति तदास्मद्वर्तनं क्रियताम् । शूद्रक उवाच—किं ते वर्तनम् । वीरवरो ब्रूते—प्रत्यहं सुवर्णशतचतुष्टयम् । राजाह—का ते सामग्री । वीरवरो ब्रूते-द्वौ बाहू तृतीयश्च खड्गः । राजाह—नैतच्छक्यम् । तच्छ्रुत्वा वीरवरः प्रणम्य चलितः । अथ मन्त्रिभिरुक्तम्—देव दिनचतुष्टयस्य वर्तनं दत्त्वा ज्ञायतामस्य स्वरूपं किं गुणयुक्तोऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति । ततो मन्त्रिवचनादाहूय वीरवराय ताम्बूलं दत्त्वा सुवर्णशतचतुष्टयं दत्तम् । तद्विनियोगश्च राज्ञा सुनिभृतं निरूपितः । तदर्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यश्च दत्तम् । स्थितस्यार्धं[4] दुःखितेभ्यः । तदवशिष्टं भोज्यव्ययविलासव्ययेन व्ययितम् । एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते । यदा च राजा स्वयं समादिशति तदा स्वगृहमपि याति ।

अथैकदा कृष्णचतुर्दश्यां रात्रौ राजा सकरुणं क्रन्दनध्वनिं शुश्राव । शूद्रक उवाच—कः कोऽत्र द्वारि । तेनोक्तम्—देव अहं वीरवरः । राजोवाच—क्रन्दनानुसरणं क्रियताम् । वीरवरः यथाज्ञापयति देव इत्युक्त्वा चलितः । राज्ञा च चिन्तितम्—नैतदुचितम् । अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रेरितः । तदनु गत्वा किमेतदिति निरूपयामि । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद्बहिर्निर्जगाम । गत्वा च वीरवरेण सा रुदती रूपयौवनसंपन्ना सर्वालंकारभूषिता काचित्स्त्री दृष्टा पृष्टा च—का त्वम् । किमर्थं रोदिषीति । स्त्रियोक्तम्—अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मीः । चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता । इदानीमन्यत्र गमिष्यामि । वीरवरो ब्रूते—यत्रापायः संभवति तत्रोपायोऽप्यस्ति । तत्कथं स्यात्पुनरिहावलम्बनं भगवत्याः । लक्ष्मीरुवाच—यदि त्वमात्मनः पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमङ्गलाया उपहारीकरोषि तदाहं पुनरत्र सुचिरं सुखं निवसामि । इत्युक्त्वादृश्याभवत् ।

---

पृ. १४ द्रष्टव्यम् । विनियोगः-व्ययकरणम् । क्रन्दनानुसरणं क्रन्दनशब्दानुरोधेन गमनम् । सूचीभेद्ये तमसि गाढान्धकारे । अवलम्बनं स्थितिः; अवस्थानम् । द्वात्रिंशल्लक्षणोपेतम् द्वे च त्रिंशच्च यद्वा द्व्यधिका त्रिंशद्यानि लक्षणानि तैः उपेतम् । सर्वमङ्गलायाः-सर्वेभ्यः सर्वेषां वा मङ्गला । सर्वाणि मङ्गलानि यस्याः इति वा सर्वमङ्गला चण्डिका । उप-

---

१ शुकस्यागमनात्तस्य इ० पा० । २ भुजः । ३ टङ्कशत० । ४ अपरार्धार्धं च दुःस्थेभ्यः । ५ देव्या अपराधेन तृतीयदिवसे राजा पञ्चत्वं यास्यति । अहमनाथा भविष्यामि । इदानीं न स्थास्यामीति । इत्य० प० पु० । ६ तत्र राजा शतायुर्भवति इत्य० प० पु० ।

ततो वीरवरेण स्वगृहं गत्वा निद्राणा स्ववधूः प्रबोधिता पुत्रश्च । तौ निद्रां परित्यज्योत्थायोपविष्टौ । वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान् । तच्छ्रुत्वा सानन्दः शक्तिधरो ब्रूते—धन्योऽहमेवंभूतः स्वामिराज्यरक्षार्थं यस्योपयोगः । तत्तात कोऽधुना विलम्बस्य हेतुः । कदापि तावदेवंविध एव कर्मण्येतस्य देहस्य विनियोगः श्लाघ्यः । यतः ।

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्तं वरं त्यागो विनाशे नियते सति ॥ १०० ॥

शक्तिधरमातोवाच—यद्येतन्न कर्तव्यं तत्केनान्येन कर्मणा मुख्यस्य महावर्तनस्य निष्क्रयो भविष्यति । इत्यालोच्य सर्वे सर्वमङ्गलायाः स्थानं गताः । तत्र सर्वमङ्गलां संपूज्य वीरवरो ब्रूते—देवि प्रसीद । विजयतां विजयतां शूद्रको महाराजः । गृह्यतामयमुपहारः । इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद । ततो वीरवरश्चिन्तयामास—गृहीतराजवर्तनस्य तावन्निस्तारः कृतः । अधुना निष्पुत्रस्य मे जीवनं विडम्बनम् । इत्यालोच्यात्मनः शिरश्छिन्नवान् । ततः स्त्रियापि स्वामिनः पुत्रस्य च शोकार्तया तदनुष्ठितम् । एतत्सर्वं श्रुत्वा दृष्ट्वा च स राजा साश्चर्यं चिन्तयामास—

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ १०१ ॥

तदेतत्परित्यक्तेन मम राज्येनाप्यप्रयोजनम् । ततः स्वशिरश्छेत्तुमुल्लासितः खड्गः शूद्रकेणापि । अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा हस्ते धृत उक्तश्च—पुत्र प्रसन्नास्मि ते[4] । एतावता साहसेनालम् । जीवनान्तेऽपि तव राज्यभङ्गो नास्ति । राजा च साष्टाङ्गपातं प्रणम्योवाच—देवि किं मे राज्येन । जीवितेन वा किं प्रयोजनम् । यद्यहमनुकम्पनीयस्तदा ममायुःशेषेणायं सदारपुत्रो वीरवरो जीवतु । अन्यथाहं यथाप्राप्तां गतिं गच्छामि । भगवत्युवाच—पुत्र अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा संतुष्टास्मि । गच्छ विजयी भव । अयमपि सपरिवारो राजपुत्रो जीवतु । इत्युक्त्वा देव्यदृश्याभवत् । ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः । राजापि तैरलक्षितः सत्वरं प्रासादगर्भं गत्वा तथैव सुप्तः ।

अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नुवाच—देव सा रुदती स्त्री मामवलोक्यादृश्याभवत् । न काप्यन्या वार्ता विद्यते । तद्वचनमाकर्ण्य संतुष्टो राजा साश्चर्यमचिन्तयत्—कथमयं श्लाघ्यो महासत्त्वः । यतः ।

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥ १०२ ॥

एतन्महापुरुषलक्षणमेतस्मिन्सर्वमस्ति । ततः स राजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्णाटराज्यं ददौ । तत्किमागन्तुको जातिमात्राद्दुष्टः । तत्राप्युत्तमाधममध्यमाः सन्ति । चक्रवाको ब्रूते—

---

द्वारीकरोषि—बलिं ददासि । धनानि इ०—सन्निमित्तं सत्कार्याय । त्यागः—जीवितस्य धनस्य च । गतपूर्वोयं श्लो० मि० २२ । निष्क्रयः—निस्तारः, आनृण्यम् । विडम्बनम्—गर्हणमात्रम् । उल्लासितः—उद्धृतः । सत्त्वोत्कर्षेण—मनस उदारतया । भृत्यवात्सल्येन—भृत्येषु वात्सल्यं स्नेहः तेन । अकृपणः—धनसंपन्नः । प्रियं ब्रूयादन्यथास्य माहात्म्यहानिः स्यादिति भावः । अविकत्थनः अनात्मश्लाघी । प्रगल्भः—शूरः । अनिष्ठुरः—स-

---

१ रक्षायां, २ अमुष्य इ० पा० । ३ राज्येनापि न प्रयो० । ४ इदानीं ते । ५ अहं पुनः इ० पा० । ६ सुप्त्वा स्थितः । ७ आगन्तुकजातिरेव दुष्टा इ० पा० । ८ सम्भवन्ति ।

योऽकार्यं कार्यवच्छास्ति स किंमन्त्री नृपेच्छया ।
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्यतः ॥ १०३ ॥

वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियंवदाः ।
शरीरधर्मकोषेभ्यः क्षिप्रं स परिहीयते ॥ १०४ ॥

शृणु देव ।　पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति ।
हत्वा भिक्षुमतो लोभान्निध्यर्थी नापितो हतः ॥ १०५ ॥

राजा पृच्छति—कथमेतत् । मन्त्री कथयति—

## ॥ कथा ९ ॥

अस्त्ययोध्यायां पुरि चूडामणिर्नाम क्षत्रियः । तेन धनार्थिना महता कायक्लेशेन भगवांश्चन्द्रार्धचूडामणिश्चिरमाराधितः । ततः क्षीणपापोऽसौ स्वप्ने दर्शनं दत्त्वा भगवदादेशाद्यक्षेश्वरेणादिष्टः—यत्त्वमद्य प्रातः क्षौरं कृत्वा लगुडहस्तः सन्स्वगृहद्वारि निभृतं स्थास्यसि । ततो यमेवागतं प्राङ्गणे भिक्षुकं पश्यसि तं निर्दयं लगुडप्रहारेण हनिष्यसि । ततोसौ भिक्षुः तत्क्षणात्सुवर्णपूर्णकलशो भविष्यति । तेन त्वया यावज्जीवं सुखिना भवितव्यम् । ततस्तथानुष्ठिते तद्वृत्तम् । तच्च क्षौरकरणायानीतेन नापितेनालोक्य चिन्तितम्—अये निधिप्राप्तेरयमुपायः । तदहमप्येवं किं न करोमि । ततः प्रभृति स नापितः प्रत्यहं तथाविधो लगुडहस्तः सुनिभृतं भिक्षोरागमनं प्रतीक्षते । एकदा तेन तथा प्राप्तो भिक्षुर्लगुडेन हत्वा व्यापादितः । तस्मादपराधात्सोऽपि नापितो राजपुरुषैस्ताडितः पञ्चत्वं गतः । अतोऽहं ब्रवीमि—पुण्याल्लब्धं यदेकेन इत्यादि । राजाह—

पुरावृत्तकथोद्गारैः कथं निर्णीयते परः ।
स्यान्निष्कारणबन्धुर्वा किं वा विश्वासघातकः ॥ १०६ ॥

यातु । प्रस्तुतमनुसंधीयताम् । मलयाधित्यकायां चेच्चित्रवर्णस्तदधुना किं विधेयम् । मन्त्री वदति—देव आगतप्रणिधिमुखान्मया श्रुतं यन्महामन्त्रिणो गृध्रस्योपदेशे चित्रवर्णेनानादरः कृतः । अतोऽसौ मूढो जेतुं शक्यः । तथा चोक्तम्—

लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः ॥ १०७ ॥

ततोऽसौ यावदस्मद्दुर्गद्वाररोधं न करोति तावन्नद्यद्रिवनवर्त्मसु तद्बलानि हन्तुं सारसादयः सेनापतयो नियुज्यन्ताम् । तथा चोक्तम् ।

दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसंकुलम् ।
घोराग्निभयसंत्रस्तं क्षुत्पिपासाहितक्लमम् ॥ १०८ ॥

---

कृपः । नृपेच्छया नृपेच्छानुरोधात् । तन्नाशः—स्वामिनः नाशः प्राणहानिः अधःपातो वा । चन्द्रार्धचूडामणिः—चन्द्रार्धं चूडामणिः शिरोभूषणं यस्य शिवः । यक्षेश्वरेण कुबेरेण । निभृतं-गुप्तम् । सुवर्णपूर्ण०—सुवर्णमुद्रापूर्ण० । तद्वृत्तम्—मृतभिक्षोः स्थाने सुवर्णनाणकपूर्णकलशो बभूवेत्यर्थः । पुरावृत्तकथोद्गारैः—अतीताख्यानेन । निर्णीयते तस्य स्वरूपपरिच्छेदः क्रियते स यथार्थस्वरूपतया ज्ञायते । निष्कारणबन्धुः स्वभावमित्रं अकृत्रिममित्रम् । विश्वास इत्यत्र विश्रम्भेति पाठः । नद्यद्रिवन०—नद्यश्च अद्रयश्च वनानि च तेषां वनानां वर्त्मसु । तत्रैव द्विषां सुखोच्छेद्यत्वात् । दीर्घवर्त्म० [illegible] । संकुलं [illegible]

प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीडितम्।
असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम् ॥ १०९ ॥

पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम्।
एवंभूतं महीपालः प विघातयेत् ॥ ११० ॥

अन्यच्च। अवस्कन्दभयाद्रा जागरकृतश्रमम्।
दिवा सुप्तं समाहन्यान्निद्राव्याकुलसैनिकम् ॥ १११ ॥

तस्य प्रमादिनो बलं गत्वा यथावकाशं दिवानिशं घ्नन्त्वस्मत्सेनापतयः। तथानुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः। ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह—तात किमित्यस्मदुपेक्षा क्रियते। किं क्वाप्यविनयो ममास्ति। तथा चोक्तम्—

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम्।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ११२ ॥

अन्यच्च। दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी।
उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः ॥ ११३ ॥

गृध्रोऽवदत्—देव शृणु।

अविद्वानपि भूपालो विद्यावृद्धोपसेवया।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ ११४ ॥

अन्यच्च। पानं स्त्री मृगया द्यूतमर्थदूषणमेव च।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ ११५ ॥

किं च। न साहसैकान्तरसानुवर्तिना
न चाप्युपायोपहतान्तरात्मना।
विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्ये च वसन्ति संपदः ॥ ११६ ॥

त्वया स्वबलोत्साहमवलोक्य साहसैकरसिना मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम्। अतो दुर्नीतेः फलमिदमनुभूयते। तथा चोक्तम्—

---

त्तम्—अनवहितं क्षीबं वा। असँस्थितम्—अव्यवस्थितम्। सुव्यस्तम्—इतस्ततोऽपसृतम्। त्रिभिर्विशेषकम्। अत्र कामन्दकः—कन्दराशैलगहननिम्नगावनसंकटे। दीर्घेध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥ व्याधिदुर्भिक्षमकरैः पीडितं दस्युविद्रुतम्। पङ्कपांशुजलक्लिन्नं व्यस्तं पुञ्जीकृतं पथि ॥ प्रसुप्तं भोजनव्यग्रमभूमिस्थमसंस्थितम्। चौराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ॥ एवमादिषु जातेषु व्यसनेषु समाकुलम्। स्वसैन्यं साधु रक्षेत परसैन्यं च घातयेत् ॥ अवस्कन्दभयात्—अवस्कन्दः आक्रमणं तद्भयाद्यः प्रजागरस्तेन कृतः श्रमः यस्य। असांप्रतम्—नियममुज्झित्वा, अविनयेन। दक्षः—स्वकार्यदक्षः। कल्यताम्—अरोगिताम्। अर्थदूषणम्—कोषस्यान्यथा व्ययः। साहसैकान्त०—साहसं अविमृश्यकारित्वं एव एकान्तः मुख्यः रसः तं अनुवर्तते तेन। उपायो०—उपायेषु साधनान्वेषणेषु उपहतः आत्मा बुद्धिर्यस्य। ऊर्जिताः—उत्कृष्टाः। उपन्यस्तेषु—प्रस्तुतेषु

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः
संतापयन्ति कमपथ्यभुजं न रोगाः।
कं श्रीर्न दर्पयति कं न विहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥ ११७॥

अपरं च। मुदं विषादः शरदं हिमागमस्तमो वि सुकृतं कृतघ्नता।
प्रियोपपत्तिः शुचमापदं नयः श्रियं समृद्धामपि हन्ति दुर्नयः ॥ ११८॥

ततो मयाप्यालोचितम्–प्रज्ञाहीनोऽयं राजा। नो चेत्कथं नीतिशास्त्रकथा वागुल्काभिस्तिमिरयति। यतः।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ ११९ ॥

तेनाहमपि तूष्णीं स्थितः। अथ राजा बद्धाञ्जलिराह—तात अस्त्वयं ममापराधः। इदानीं यथाहमवशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश। गृध्रः स्वगतं चिन्तयति—क्रियतामत्र प्रतीकारः। यतः।

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च ॥ १२० ॥

मन्त्री विहस्य ब्रूते—देव मा भैषीः। समाश्वसिहि। शृणु देव।

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके।
कर्मणि व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः ॥ १२१ ॥

अपरं च। आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ १२२ ॥

तदत्र भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि। राजाह—कथमधुना स्वल्पबलेन तत्संपद्यते। गृध्रो वदति–देव सर्वं भविष्यति। यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यंभावः। तत्सहसैव दुर्गद्वारावरोधः क्रियताम्। अथ प्रणिधिना बकेनागत्य हिरण्यगर्भस्य कथितम्–देव स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपष्टम्भादागत्य दुर्गद्वारावरोधं करिष्यति। राजहंसो ब्रूते–सर्वज्ञ किमधुना विधेयम्। चक्रो ब्रूते–स्वबले सारासारविचारः क्रियताम्। तज्ज्ञात्वा सुवर्णवस्त्रादिकं[3] यथार्हं प्रसादप्रदानं क्रियताम्। यतः।

---

कर्तव्यतया निर्दिष्टेषु। दुर्मन्त्रिणम्–दुष्टः मन्त्री यस्य त यद्वा दुष्टो मन्त्रोस्यास्तीति तम्। नीतिदोषाः–नयमार्गोल्लङ्घनजन्यापदः। स्त्रीकृताः कामिन्युद्भूताः। प्रियोपपत्तिः–प्रियस्य इष्टस्य उपपत्तिः सिद्धिः। नीतिशास्त्र०–नीतिशास्त्रस्य नीतिशास्त्रसंबन्धिनी कथा एव कौमुदी ज्योत्स्ना ताम्। वागुल्काभिः–वाचः दुर्वचांसि ता एव उल्काः अलातानि ताभिः तिमिरयति मलिनयति। अस्त्वयं क्षन्तव्यः इत्यर्थः। नियन्तव्यः–निग्रहीतव्यः। भिन्नसंधाने–भिन्नस्य प्रतिहतस्य संधाने पुनः सफलीकरणे इत्यर्थः। यद्वा भिन्नानां संधाने संघट्टने, संमेलने इत्यर्थः। यद्वा भिन्नसंधाने इष्टार्थसाधकोपाये मोघीभूते। व्यग्राः—आकुलचित्ताः त्वरिता वा। न च पारं गच्छन्तीति भावः। कृताधियः–

---

१ कथां स्ववाग्छाभिरन्तरयति इ० पा०। २ अवश्यंभावि लक्षणम् इ० पा०। ३ सुवर्णवस्त्रादिप्रदानं।

यः काकिनीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम् ।
कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ॥ १२३ ॥

अन्यच्च । क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीष्वधनेषु बन्धुषु ह्यतिव्ययो नास्ति नराधिपाष्टसु ॥ १२४ ॥

यतः । मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि ।
कः सुधीस्त्यजते भाण्डं शुल्कस्यैवातिसाध्वसात् ॥ १२५ ॥

राजाह—कथमिह समयेऽतिव्ययो युज्यते । उक्तं च—
आपदर्थे धनं रक्षेत्—

मन्त्री ब्रूते— श्रीमतः कथमापदः ।

राजाह— कदाचिच्चलते लक्ष्मीः

मन्त्री ब्रूते— संचितापि विनश्यति ॥ १२६ ॥

तद्देव कार्पण्यं विमुच्य स्वसुभटा दानमानाभ्यां पुरस्क्रियन्ताम् । तथा चोक्तम्—
परस्परज्ञाः संहृष्टास्त्यक्तुं प्राणान्सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषद्बलम् ॥ १२७ ॥

अपरं च । सुभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः ।
अपि पञ्चशतं शूरा मृद्नन्ति रिपुवाहिनीम् ॥ १२८ ॥

किं च । शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ १२९ ॥

यतः । सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ १३० ॥

ईदृशि प्रस्तावेऽमात्यास्तावदवश्यमेव पुरस्कर्तव्याः । तथा चोक्तम्—
यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी ।
स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३१ ॥

यतः । धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनाक्षिप्तः कार्याब्धौ स निमज्जति ॥ १३२ ॥

शृणु देव । हर्षक्रोधौ यतौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
नित्यं भृत्यान्ववेक्षा च तस्य स्याद्धनदा धरा ॥ १३३ ॥
येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्या इति तान्राजा नावमन्येत्कदाचन ॥ १३४ ॥

---

शिक्षितबुद्धयः प्राज्ञाः । अदीर्घसूत्रता कार्यतत्परता । अपथप्रपन्नाम्–अन्यथाव्यायितां दुरुपयुक्ताम् । समुद्धरेत्–अपव्ययाद्रक्षेत् । व्ययावसरानाह–क्रतावित्यादिना । व्यसने आपदि, तन्निराकरणे इत्य० । अष्टसु—एतेषु अष्टसु विषयेषु धनव्ययोवश्यं करणीयः । भाण्डम्—पण्यद्रव्यम् । शुल्कस्य–राजदेयकरस्य । परस्परज्ञाः—ज्ञातान्योन्यस्वभावाः, बद्धसौहृदा इत्यर्थः । त्यक्तुं०––जीवितव्ययेनापि स्वामिनं सेवितुं कृतनिश्चयाः । कृतनाशकः–अकृतज्ञः कृतघ्नः । आत्मंभरिः–स्वार्थपरः । यो येन प्रतिबद्धः यस्य हिताहितं यन्निबन्धनमस्ति । कर्मणि संबद्धो वा । प्राणेषु०–प्राणरक्षणविषये धनरक्षणविषये च । अनीतिपवनाक्षिप्तः–अनीतिः कुनयः सा एव पवनः तेनाक्षिप्तः उद्धूतः । निमज्जति–कार्यविनाशेन नश्यतीति भावः । भृत्यान्ववेक्षा–भृत्येषु आदरः । उच्चयापचयौ–उत्कर्षापकर्षौ

---

१ स्थाने च इ० पा० । २ धनव्ययस्त्वेषु न गण्यते बुधैः इ० पा० । ३ कोषः स्वल्पव्ययेन–स्वप्रत्ययेन–च इ० पा० । ४ भृत्यानुपेक्षा इ० पा० ।

यतः । महीभुजो मदान्धस्य विषमे कार्यसागरे ।
स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ॥ १३५ ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते—देव दृष्टिप्रसादं कुरु । एष युद्धार्थी विपक्षो दुर्गद्वारि वर्तते । तद्देवपादादेशाद्बहिर्निःसृत्य स्वविक्रमं दर्शयामि । तेन देवपादानामानृण्यमुपगच्छामि । चक्रो ब्रूते—मैवम् । यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनम् ।

अपरं च । विषमोऽपि यथा नक्रः सलिलान्निःसृतो वशः ।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥ १३६ ॥

देव स्वयं गत्वा दृश्यतां युद्धम् । यतः ।

पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवम् ॥ १३७ ॥

अनन्तरं ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—तात स्वप्रतिज्ञातमधुना निर्वाहय । गृध्रो ब्रूते—देव शृणु तावत् ।

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १३८ ॥

तत्तावदत्र नास्ति । उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् ।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥ १३९ ॥

अत्र च यथाशक्ति क्रियते यत्नः । [ कर्णे कथयति ] एवमेव । ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु प्रवृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः । ततः गृहीतं गृहीतं दुर्गम् इति कोलाहलं श्रुत्वानेकगृहेषु च प्रदीप्तं पावकं प्रत्यक्षेणावलोक्य राजहंसस्य सैनिकास्तथान्ये दुर्गवासिनः सत्वरं ह्रदं प्रविष्टाः । यतः ।

यातव्यत्व सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
प्राप्तकाले यथाशक्ति कुर्यान्न तु विचारयेत् ॥ १४० ॥

यातकृतश्च सुखिस्वभावान्मन्दगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भः सारसमाह—सारस सेनापते ममानुरोधादात्मानं नव्यापादयिष्यसि । गन्तुं त्वमधुनापि समर्थः । तद्गत्वा जलं प्रवि-श्यात्मानं परिक्ष । अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसंमत्या राजानं करिष्यसि । सारसो ब्रूते—देव न वक्तव्यमेवं दुःसहं वचः । यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयतां देवः । अहं देव दुर्गाधिकारी मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः । अपरं च देव ।

---

अभ्युदयाधःपातौ । सुहृत्सचिवचेष्टितं—शोभनं हृदयं येषां ते सुहृदः हितबुद्धयः ये सचिवाः तेषां चेष्टितं क्रिया । सचिवा एव प्रतीकारं चिन्तयित्वा स्वामिनमापद उद्धरन्तीति भावः । विषमः उद्धर्तुं जेतुं वा अशक्यः । वशः—अन्येषां वशगो भवति । यद्वा अवश इति पदच्छेदः । अवशः विकलः अशरणो वा । अकालसहं दीर्घकालरक्षणाक्षमम् । उपजापः—भेदः । चिरारोधः । दीर्घकालमवरोधः । लङ्घनोपायाः ग्रहणोपायाः । सुमन्त्रितं—शोभनां मन्त्रणां कुर्यात् । सुपलायितम्—प्राप्तकाले बन्धनपरिहारार्थं पलायनमपि कर्तव्यम् । ममानुरोधात्—मदपेक्षया । क्षमी—क्षमाशीलः । अपराधसहः इत्यर्थः । शुचिः—शुद्धान्तःकरणः

---



१ सत्यत्र इ० पा० । २ सुखी स्व० इ० पा० । ३ राजा ब्रूते । ४ कुक्कुटेन । ५ सर्वसंमत्या

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते ।

राजाह—सत्यमेवैतत् । किंतु ।

शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ १४१ ॥

सारसो ब्रूते—अन्यच्च देव शृणु ।

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत[1] ॥ १४२ ॥

अन्यच्च । भवेऽस्मिन्पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे ।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४३ ॥

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोषो बलं सुहृत् ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १४४ ॥

देव त्वं च स्वामी सर्वथा रक्षणीयः । यतः ।

प्रकृतिः स्वामिना त्यक्ता समृद्धापि न जीवति ।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १४५ ॥

अपरं च । नरेशे जीवलोकोऽयं निमीलति निमीलति ।
उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १४६ ॥

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः । ततः सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा । अनन्तरं कुक्कुटेन नखमुखप्रहारैर्जर्जरीकृतेन सारसेन स्वाङ्गेनाच्छाद्य प्रेर्य राजा जले क्षिप्तः । कुक्कुटसेनापतिश्च चञ्चुप्रहारेण व्यापादितः । पश्चात्सारसोपि बहुभिः संभूय व्यापादितः । अथ चित्रवर्णो राजा दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा[2] बन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम ।

अथ राजपुत्रैरुक्तम्—तस्मिन्राजबले स पुण्यवान्सारस एव येन स्वदेहत्यागेन स्वामी रक्षितः । उक्तं चैतत्—

जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम् ॥ १४७ ॥

विष्णुशर्मोवाच—स[3] तावद्विद्याधरीपरिजनः स्वर्गसुखमनुभवतु महासत्त्वः । तथा चोक्तम्—

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १४८ ॥

---

अपापबुद्धिः । पवन०–पवनेन वात्यया उद्भ्रान्ता ये वीचयस्तरङ्गास्तेषां विभ्रमः भ्रमणं तद्वद्भंगुरे क्षणविध्वंसिनि । नरेशे निमीलति नाशं याति सति । निमीलति–नाशमेति । अत्र कामन्दकः–नरेश्वरे जगत्सर्वं निमीलति निमीलति । सूर्योदये यथाम्भोजं तत्प्रबोधे प्रबुध्यते । स्वदेहान्तरितः–स्वदेहस्य मध्येऽवस्थापनेन व्यवहितः । स्कन्धावारम्–स्वसैन्यम् । विषाण०–विषाणाभ्यामुल्लिखितौ स्कन्धौ यस्य । विद्याधरीपरिजनः विद्याधरास्त्रियः परिजनः यस्य ।

---

१ कुरुध्वम् इ० पा० । २ दुर्गाभ्यन्तरास्थितं ग्राह्यं इ० पा० । ३ स तावत्सत्त्वक्रीतानक्षयलोकान्विद्याधरीपरिजनोनुभवतु महासत्त्वः । इ० पा० ।

यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाँल्लभते लोकान्यदि क्लैब्यं न गच्छति ॥ १४९ ॥

विग्रहः श्रुतो भवद्भिः राजपुत्रैरुक्तम्--श्रुत्वा सुखिनो भूता वयम् । विष्णुशर्माब्रवीत्--अपरमप्येवमस्तु ।

विग्रहः करितुरङ्गपत्तिभिर्नो कदापि भवतां महीभृताम् ।
नीतिमन्त्रपवनैः समाहताः संश्रयन्तु गिरिगह्वरं द्विषः ॥ १५० ॥

इति हितोपदेशे विग्रहो नाम तृतीयः कथासंग्रह समाप्तः ।

# ॥ संधिः ॥

पुनः कथारम्भकाले राजपुत्रैरुक्तम्--आर्य विग्रहः श्रुतोऽस्माभिः । संधिरधुनाभिधीयताम् । विष्णुशर्मणोक्तम्--श्रूयताम् । संधिमपि कथयामि यस्यायमाद्यः श्लोकः-

वृत्ते महति सङ्ग्रामे राज्ञोर्निहतसेनयोः ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात् ॥ १ ॥

राजपुत्रा ऊचुः--कथमेतत् । विष्णुशर्मा कथयति--

ततस्तेन राजहंसेनोक्तम्--केनास्मद्दुर्गे निक्षिप्तोऽग्निः । किं पारक्येण किंवास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन । चक्रो ब्रूते--देव । भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् । राजा क्षणं विचिन्त्याह--अस्ति तावदेव मम दुर्दैवमेतत् । तथा चोक्तम्--

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुघटितं क्वापि दैवयोगाद्विनश्यति ॥ २ ॥

मन्त्री ब्रूते--उक्तमेवैतत् ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांस्तु नैव जानात्यपण्डितः ॥ ३ ॥

अपरं च । सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

राजाह--कथमेतत् । मन्त्री कथयति--

---

यत्र तत्र-क्वापि । पुण्ये अपुण्ये वा देशे । यदि क्लैब्यं इ०-यदि शौर्येण युद्धं करोति । नो कदापि-कदापि महीभृतां विग्रहः न भवतु । यद्वा भवतां युष्माकं इतरेषां महीभृतां च विग्रहः नो भवेदिति शेषः । किंतु नीतिः नयः मन्त्राः मन्त्रणाः ते एव पवनाः तैः इति ॥

सन्धिः-सामकरणम् । स्वर्णादिदानेन परैः प्रीत्युत्पादनान्मित्रीकरणम् । स्थेयाभ्याम् मध्यस्थाभ्याम् । पारक्येण-परकीयेण शत्रुणा वा । निष्कारणबन्धुः-सोपालम्भं वच एतद् । क्वापि-कदाचिदपि । अपण्डितः नरः विषमां कष्टां दशामवस्थां

---

१ मन्ये विघटितं यतः इ० पा० । २ अस्मात्परं--अपरं च ।

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा ॥ इत्यधिकोऽयं० पा० ।

॥ कथा ॥ १ ॥

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः । तत्र चिरं संकटविकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—यदत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः । तदाकर्ण्य कूर्मो हंसावाह—सुहृदौ श्रुतोऽयं धीवरालापः अधुना किं मया कर्तव्यम् । हंसावाहतुः—ज्ञायतां पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम् । कूर्मो ब्रूते-मैवम् । यतो दृष्टव्यतिकरोहमत्र । तथा चोक्तम्—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ५ ॥

तावाहतुः—कथमेतत् । कूर्मः कथयति—

॥ कथा २ ॥

पुरास्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्रानागतविधाता नामैको मत्स्यः । तेनोक्तम्—अहं तावज्जलाशयान्तरं गच्छामि । इत्युक्त्वा ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्—भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने यथाकार्यमनुष्ठेयम् । तथा चोक्तम्—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा ॥ ६ ॥

यद्भविष्यः पृच्छति—कथमेतत् । प्रत्युत्पन्नमति राह—

॥ कथा ३ ॥

अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक् । तस्य रत्नप्रभा नाम वधूः केनापि स्वसेवकेन सह सदा रमते । यतः ।

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ७ ॥

अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनावलेकिता। ततः सा बन्धकी सत्वरं भर्तुः समीपं गत्वाह—नाथ एतस्य सेवकस्य महती निर्वृतिः । यतोऽयं चौरिकां कृत्वा कर्पूरं खादतीति मयास्य मुखमाघ्राय ज्ञातम् । तथा चोक्तम्—

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ८ ॥

तच्छ्रुत्वा सेवकेन प्रकुप्योक्तम्—यस्य स्वामिनो गृह एतादृशी भार्या तत्र सेवकेन कथं स्थातव्यं यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति । ततोऽसावुत्थाय चलितः । साधुना यत्नात्प्रबोध्य धृतः । अतोऽहं ब्रवीमि—उत्पन्नामापदम् इत्यादि । ततो यद्भविष्येणोक्तम्—

---

प्राप्य इति योज्यम् । उषित्वा-वसतिं कृत्वा । दृष्टव्यतिकरः—दृष्टः व्यतिकरः व्यसनं अन्येषामिति यावत् येन । अनागतविधाता-अनागतं विदधाति भाव्यापदः प्रतीकारं पूर्वमेव करोतीति अनागतविधाता । प्रत्युत्पन्नमतिः—प्रत्युत्पन्ना सङ्कटे झटित्युत्पन्ना बुद्धिः यस्य । यद्भविष्यः-यद्भविष्यति तद्भवतु इति वदतीति । निर्वृतिः-सुखं भोगेच्छा वा । आहार इ०—सुह०—श्लो० ११७. । प्रतिक्षणं—क्षणे क्षणे ।

---

१ किं समाधातव्यम् इ० पा० । २ यतो हिङ्गुगन्धः प्रत्यक्षोस्य मुखे मया प्राप्तः । इ० पा० । ३ ईदृशी विधा ।

यद्भावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ९ ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः । ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गभीरं नीरं प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोहं ब्रवीमि—अनागतविधाता इत्यादि ॥ तद्यथाहमन्यद्ह्रदमद्य प्राप्नोमि तथा क्रियताम् । हंसावाहतुः—जलाशयान्तरे प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को विधिः । कूर्म आह—यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि स उपायो विधीयताम् । हंसौ ब्रूतः—कथमुपायः संभवति । कच्छपो वदति—युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनावलम्बितव्यम् । युवयोः पक्षबलेन मयापि सुखेन गन्तव्यम् । हंसौ ब्रूतः—संभवत्येष उपायः । किंतु

उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः ॥ १० ॥

कूर्मः पृच्छति—कथमेतत् । तौ कथयतः—

## ॥ कथा ४ ॥

अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः । तत्रैरावतीतीरे न्यग्रोधपादपे बका निवसन्ति । तस्य वृक्षस्याधस्ताद्विवरे सर्पस्तिष्ठति । स च तेषां बालापत्यानि खादति । अथ शोकार्तानां बकानां विलापं श्रुत्वा केनचिद्वकेनाभिहितम्—एवं कुरुत यूयं । मत्स्यानादाय नकुलविवरादारभ्य सर्पविवरं यावत्पङ्क्तिक्रमेणैकैकशो मत्स्यान् विकीर्य धत्त । ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्पो द्रष्टव्यः स्वभावविद्वेषाद्व्यापादयितव्यश्च । तथानुष्ठिते तद्वृत्तम् । ततस्तत्र वृक्षे नकुलैर्बकशावकानां रावः श्रुतः । पश्चात्तैर्वृक्षमारुह्य बकशावकाः खादिताः । अत आवां ब्रूवः—उपायं चिन्तयन् इत्यादि ॥ आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणम्[3] । तत्सर्वथात्रैव स्थीयताम् । कूर्मो वदति—किमहमज्ञः । न[4] किमपि मया वक्तव्यम् । ततस्तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च । तत्र कश्चिदाह— यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः । कश्चिद्वदति अत्रैव दग्ध्वा खादितव्योऽयम् । कश्चिद् ब्रूते—गृहं नीत्वा भक्षणीयः इति । तत्परुषवचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह—युष्माभिर्भस्म भक्षितव्यम् । इति वदन्नेव पतितो गोरक्षकैर्व्यापादितश्च । अतोऽहं ब्रवीमि—सुहृदां हितकामानाम् इत्यादि ॥ अथ प्रणिधिर्बकस्तत्रागत्योवाच । देव प्रागेव मया निगदितं दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति । तच्च युष्माभिर्न कृतम् । अतस्तदनवधानस्य फलमनुभूतम् । दुर्गदाहश्चायं मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः । राजा निःश्वस्याह—

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात्पतितः प्रतिबुध्यते ॥ ११ ॥

---

यद्भावि इ०–प्रस्ता० श्लोकः २९ । अवलम्बितम्–आश्रयितव्यम् । न्यग्रोधपादपे–वटवृक्षे । परुषवचनम्–कटुवचः, निष्ठुरभाषितम् । विस्मृतपूर्वसंस्कारः–नष्टकृतसमयस्मृतिः । तदनवधानस्य–मद्वचनोपेक्षायाः । प्रणयात्—प्रेमदर्शनात् । याच्ञायाः वा । ‘ प्रणयः प्रसरे प्रेम्णि याच्ञाविश्रम्भयोरपि । ’ इति मेदिनी । पतितः प्रतिबुध्यते–जातपतनः चेतनां लभते ।

---

१ स्थलात् इ० पा० । २ सुताः इ० पा० । ३ अवश्यं भविष्यति इत्य० । अस्मात्प्राक्–नाहमुत्तरं दास्यामि इ० [illegible]

प्रणिधिरुवाच--इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्--अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् । तथा चोक्तम्--

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ १२ ॥

चक्रवाको ब्रूते[1]--ततस्ततः । प्रणिधिरुवाच--ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम् । देव नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतः ।

अविचारयतो युक्तिकथनं तुषकण्डनम्[2] ।
नीचेषूपकृतं राजन्वालुकास्विव मूत्रितम् ॥ १३ ॥

अपरं च । महतामास्पदे नीचः कदापि न कर्तव्यः । तथा चोक्तम्--

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥ १४ ॥

चित्रवर्णः पृच्छति--कथमेतत् । मन्त्री[3] कथयति--

॥ कथा ५ ॥

अस्ति गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः । तेनाश्रमसन्निधाने मूषिकशावकः काकमुखाद्भ्रष्टो दृष्टः । ततः[4] स्वभावदयात्मना तेन मुनिना नीवारकणैः संवर्धितः । ततो[5] बिडालस्तं मूषिकं खादितुमुपधावति । तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश । ततो मुनिनोक्तम्--मूषिक त्वं मार्जारो भव । ततः स बिडालः कुक्कुरं दृष्ट्वा पलायते । ततो मुनिनोक्तम्--कुक्कुराद्बिभेषि । त्वमेव कुक्कुरो भव । स कुक्कुरो व्याघ्राद्बिभेति । ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः । अथ व्याघ्रमपि तं मूषिकनिर्विशेषं पश्यति स मुनिः । अथ तं मुनिं दृष्ट्वा व्याघ्रं च सर्वे वदन्ति--अनेन मुनिना मूषिको व्याघ्रतां नीतः । एतच्छ्रुत्वा स व्याघ्रः सव्यथोऽचिन्तयत्--यावदनेन मुनिना जीवितव्यं तावदिदं मे स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते । इत्यालोच्य मुनिं हन्तुं गतः । ततो मुनिना तज्ज्ञात्वा पुनर्मूषिको भव इत्युक्त्वा मूषिक एव कृतः । अतोऽहं ब्रवीमि--नीचः श्लाघ्यपदम् इत्यादि ॥ अपरं च । सुकरमिदमिति न मन्तव्यम् । शृणु ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलोभाद्बकः पश्चान्मृतः कर्कटकग्रहात् ॥ १५ ॥

चित्रवर्णः पृच्छति--कथमेतत् । मन्त्री कथयति--

---

पक्षे विनष्टः यथावत्पुरुषस्वरूपं जानाति । प्रसादितेन--प्रसन्नेन । कृतकृत्यस्य--कृतं कृत्यं कर्तव्यं स्वामिनियोगो वा येन । फलेन पुरस्कारादिना । अविचारयतः असमीक्ष्यकारिणः । तुषेति--निरर्थकमिति यावत् । उपकृतम्--उपकारकरणम् । मूत्रितम्--तद्यथा चिरं न तिष्ठति व्यर्थं च तथा । स्वभावदयात्मना--दयायुक्तः आत्मा दयात्मा स्वभावात् निसर्गतः दयात्मा यस्य तेन । क्रोडे अङ्के भुजान्तरे वा । मूषिकनिर्विशेषम्--मूषिकाभिन्नत्वेन । स्वरूपाख्यानम्--यथावत्स्वरूपवर्णनम् । न पलायिष्यते--नापयास्यति । इदं मेघवर्णस्य कर्पूरद्वीपराज्येऽभिषेचनम् ।

---

१ ब्रूते देव, श्रुतं यत्प्रणिधिः कथयति । राजाह ततस्ततः इ० पा० । २ अधिकारेण यो युक्तः कथं तस्यातिखण्डनम् । इ० पा० । ३ दूरदर्शी इ० पा० । ४ पश्चाद्दयालुना । ५ तं च मूषकं खादितुं यत्नादन्विष्यन् बिडालो मुनिना दृष्टः । ततस्तपःप्रभावात्स मूषको बिडालः कृतः इ० पा०

## ॥ कथा ६ ॥

अस्ति मालवाविषये पद्मगर्भाभिधानं सरः। तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित्कुलीरेण दृष्टः पृष्टश्च--किमिति भवानत्राहारत्यागेन तिष्ठति। बकेनोक्तम्। भद्र शृणु। मत्स्या मम जीवनहेतवः। ते चावश्यं कैवर्तैरागत्य व्यापादयितव्या इति वार्ता नगरोपान्ते मया श्रुता। अतो वर्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाहारेऽप्यनादरः कृतः। ततः सर्वैर्मत्स्यैरालोचितम्--इह समये तावदुपकारक एवायं लक्ष्यतेऽस्माकम्। तदयमेव यथाकर्तव्यं पृच्छ्यताम्। तथा चोक्तम्--

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः॥ १६॥

मत्स्या ऊचुः--भो बक कोऽत्र रक्षणोपायः। बको ब्रूते--अस्ति रक्षणोपायो जलाशयान्तराश्रयणम्। तत्राहमेकैकशो युष्मान्नयामि। मत्स्या आहुः--एवमस्तु। ततो असौ बकस्तान्मत्स्यानेकैकशो नीत्वा खादति। अनन्तरं कुलीरस्तमुवाच--भो बक मामपि तत्र नय। ततो बकोऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान्। कुलीरोऽपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत। हा हतोस्मि। मन्दभाग्यः। भवतु। इदानीं समयोचितं व्यवहरामि। यतः।

तावद्भयात्तु भेतव्यं यावद्भयमनागतम्।
आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत्॥ १७॥

अपरं च। अभियुक्तो यदा पश्येन्न किंचिद्धितमात्मनः।
युद्ध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह॥ १८॥

अन्यच्च। यत्रायुद्धे ध्रुवो नाशो युद्धे जीवितसंशयः।
तं कालमेकं युद्धस्य प्रवदन्ति मनीषिणः॥ १९॥

इत्यालोच्य स कुलीरस्तस्य ग्रीवां चिच्छेद। स बकः पञ्चत्वं गतः। अतोऽहं ब्रवीमि भक्षयित्वा बहून्मत्स्यान् इत्यादि॥ ततः पुनः स चित्रवर्णो राजाऽवदत्। शृणु तावन्मन्त्रिन् मयैतदालोचितमस्ति यदत्रावस्थितेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि। तेन महता विलासेनास्माभिर्विन्ध्याचले स्थातव्यम्। दूरदर्शी विहस्याह--देव

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा॥ २०॥

---

कर्कटकग्रहात्-कुलीरस्य ग्रहात्। मालवविषये मालवदेशे। कैवर्तैः धीवरैः। वर्तनाभावात् वर्तनं जीविका तस्याभावात्। उपकारापकारौ इ०-यतः उपकारापकारौ इष्टानिष्टौ एतयोः मित्रस्य शत्रोश्च लक्षणं लक्ष्यं ज्ञातव्यम्। अपूर्व-अभुक्तपूर्वं। धृतवान्-स्थापयामास। मत्स्यकण्टकाकीर्णं मत्स्यानामस्थिभिर्व्याप्तम्। अभीतवत्-शूर इव। अभियुक्तः इत्या-यदा प्राज्ञः पण्डितः अभियुक्तः शत्रुणाक्रान्तः सन् इ०। यत्रायुद्धे इ०-गतपूर्वोऽयं। श्लोकः। सु०. ६८। विलासेन- सुखोपभोगेन। अनागतवतीं चिन्ताम्-अनुपस्थितस्य विचारम्। यद्वा चिन्ता

---

१ दूरतः पृष्टः। २ आहारस्यापि निरादरः। ३ मत्स्यैभयादुक्तम् इ० पा०। ४ नीतवान्। अथ बकेन स्थले ... कुलीरः इ० पा०।

राजाह—कथमेतत् । मन्त्री कथयति—

॥ कथा ७ ॥

अस्ति देवीकोटनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवत्संक्रान्त्यां सक्तुपूर्णशराव एकः प्राप्तः ॥ ततस्तमादायासौ कुम्भकारस्य भाण्डपूर्णमण्डपिकैकदेशे रौद्रेणाकुलितः सुप्तः । ततः सक्तुरक्षार्थं हस्ते दण्डमेकमादायाचिन्तयत्-यद्यहं सक्तुशरावं विक्रीय दश कपर्दकान्प्राप्स्यामि तदात्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीय विक्रीयानेकधा वृद्धैस्तैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । अनन्तरं तासु सपत्नीषु रूपयौवनवती या तस्यामधिकानुरागं करिष्यामि । अनन्तरं संजातेर्ष्यास्तत्सपत्न्यो यदा द्वंद्वं करिष्यन्ति तदा कोपाकुलोऽहं ता इत्थं लगुडेन ताडयिष्यामि । इत्यभिधाय लगुडः क्षिप्तः । तेन सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुम्भकारेण तथाविधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपिकागर्भाद्बहिष्कृतश्च । अतोऽहं ब्रवीमि—अनागतवतीं चिन्ताम् इत्यादि ॥ ततो राजा रहसि गृध्रमुवाच—तात यथाकर्तव्यं उपदिश । गृध्रो ब्रूते—

मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥ २१ ॥

शृणु देव किमस्माभिर्बलदर्पाद्दुर्गं भग्नं नो वा भवतः प्रतापाधिष्ठितेनोपायेन । राजाह—भवतामुपायेन । गृध्रो ब्रूते—यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते तुल्यबलेन सह पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति । सुखशोभार्थं च संधाय गम्यताम् । दुर्गं भग्नं कीर्तिश्च लब्धैव । मम संमतं तावदेतत् । यतः ।

यो हि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह तथ्यानि तेन राजा सहायवान् ॥ २२ ॥
युद्धे विनाशो भवति कदाचिदुभयोरपि ।
न हि संशयितं कुर्यादित्युवाच बृहस्पतिः ॥ २३ ॥

अन्यच्च । सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च ।
युधि संदेहदोलास्थं को हि कुर्यादबालिशः ॥ २४ ॥

---

कल्पना । विषुवत्संक्रान्तिः—मेषसंक्रान्तिः । सक्तुपूर्णशरावः—सक्तुभिर्भर्जितयवचूर्णेन पूर्णः शरावः मृत्पात्रम् । प्राप्तः—प्रतिग्रहेण लब्धः । रौद्रेण—तपनातपेन । पूगाः क्रमुकाः । सपत्नीषु—समानः पतिर्यासां ताः सपत्न्यः । संजातेर्ष्याः—सपत्नीगौरवं दृष्ट्वा संजाता उत्पन्ना ईर्ष्या द्वेषः यासाम् । कोपाकुलः—क्रोधवशः । मदोद्धतस्य—मदः गर्वः । पक्षे दानवारि । संकीर्णस्य—मत्तस्य अत एव अवशस्य । नेतारः—मन्त्रिणः हस्तिपकाश्च । नो वा—अथवा । प्रतापाधिष्ठितेन—प्रतापेन महिम्ना अधिष्ठितेन उत्तम्भितेन ॥ सूचितेनेति यावत् । सुखशोभार्थम्—सुखं कल्याणं शोभा गौरवं । धर्मम्—यथाकर्तव्यम् । प्रियाप्रिये—प्रियं चाप्रियं च । राज्ञः किं प्रियं किं अप्रियं इति विचारणायामनादरं कृत्वा । संशयितम्—संशयः, द्विधाबुद्धिः । संदेहदोलास्थं—संदेहः संशयः एव दोला तत्रस्थं संशयदोलारूढं,

---

१ देव० इ० पा० । २ विषुवत्समये । ३ करोमि ।

अपरं च। संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि।
सुन्दोपसुन्दावन्योन्यं नष्टौ तुल्यबलौ न किम् ॥ २५ ॥
राजोवाच—कथमेतत्। मन्त्री कथयति—

॥ कथा ८ ॥

पुरा दैत्यौ सहोदरौ सुन्दोपसुन्दनामानौ महता कायक्लेशेन त्रैलोक्यराज्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ। ततस्तयोर्भगवान्परितुष्टः वरं वरयतमित्युवाच। अनन्तरं तयोः समधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ। यद्यावयोर्भगवान्परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु। अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वती प्रदत्ता। ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्घातिभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेत्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित्पृच्छ्यतामिति मतौ कृतायां स एव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः। अनन्तरमावाभ्यामियं स्वबललब्धा कस्येयमावयोर्भवति इति ब्राह्मणमपृच्छताम्। ब्राह्मणो ब्रूते—

ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २६ ॥

तद्युवां क्षत्रधर्मानुगौ। युद्ध एव युवयोर्नियमः। इत्यभिहिते सति साधूक्तमनेन इति कृत्वान्योन्यतुल्यवीर्यौ समकालमन्योन्यघातेन विनाशमुपगतौ। अतोऽहं ब्रवीमि—संधिमिच्छेत्समेनापि इत्यादि ॥ राजाह—प्रागेव किं नोक्तं भवद्भिः। मन्त्री ब्रूते—मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः। तदापि मम संमत्या नायं विग्रहारम्भः। सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्—

सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान्बली।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः ॥ २७ ॥
सत्योऽनुपालयन्सत्यं संधितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम् ॥ २८ ॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युद्ध्यते।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ २९ ॥
संधिः कार्योऽप्यनार्येण विनाशे समुपस्थिते।
विना तस्याश्रयेणार्यः कुर्यान्न कालयापनम् ॥ ३० ॥
संहतत्वाद्यथा वेणुर्निबिडैः कण्टकैर्वृतः।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥ ३१ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३२ ॥

---

संशयग्रस्तम्। समधिष्ठितया—देहाधिष्ठितया। सरस्वत्या हेतुना। जगद्घातिभ्याम्—कृतलोकक्रन्दनाभ्यां। पापतिमिराभ्याम्—पापं एव तिमिरं नेत्ररोगः ययोः ताभ्याम्। पापबुद्ध्योपहतहिताहितबुद्ध्योः इत्यर्थः। यद्वा पापतिमिराभ्यां पापतिमिरावताराभ्यामिव स्थिताभ्याम्। प्रमाणपुरुषः—मध्यस्थः। भट्टारकः—देवः चन्द्रशेखरः। अवसानपर्यन्तम्—समाप्तिं यावत्। सन्धेय०—सन्धेयस्य संधातुं योग्यस्य ये गुणास्तैः युक्तः। विग्राह्यः—विग्रहीतुं योग्यः। सत्यार्यौ—सत्यः सत्यशीलः आर्यः सज्जनः तौ। सन्धितः—सन्धिः अस्य संजातः। अभियुक्तस्य—शत्रुणा आक्रान्तस्य सतः। कालयापनम्—कालातिवाहनम्। सुखेन आयुः क्षपयेदित्यर्थः। निदर्शनम्—नीतिशास्त्राज्ञा। अनुशासनम्।

जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३३ ॥

अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रतापेन तस्याशु वशमायान्ति[1] शत्रवः ॥ ३४ ॥

तत्र तावद्बहुभिर्गुणैरुपेतः संधेयोऽयं राजा । चक्रवाकोऽवदत्--प्रणिधे सर्वमवगतम् । व्रज पुनर्ज्ञात्वागमिष्यसि । राजा[2] चक्रवाकं पृष्टवान्--मन्त्रिन् असंधेयाः कति । तान[3]पि ज्ञातुमिच्छामि । मन्त्री ब्रूते-देव कथयामि । शृणु ।

बालो वृद्धो दीर्घरोगी[4] तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ ३५ ॥

विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ ३६ ॥

दैवोपहतकश्चैव दैवचिंतक[5] एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ ३७ ॥

अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३८ ॥

एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३९ ॥

बालस्याल्पप्रभावत्वान्न लोको योध्दुमिच्छति ।
युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिशः ॥ ४० ॥

उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ४१ ॥

सुखोच्छेद्यस्तु भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ४२ ॥

---

सर्वः भुज्यते--बहुयुद्धविजयिनः उपयोगितां व्रजतीति भावः । पुनर्ज्ञात्वा--शत्रुवृत्तान्तमिति शेषः । ज्ञातिबहिष्कृतः--ज्ञातिभिः निराकृतः । भीरुकः-भीरुः एव भीरुकः । स्वार्थे कण् । विरक्तप्रकृतिः--विरक्ता अनासक्ताः प्रकृतयः प्रजा अमात्या वा यस्य । अनेकचित्तमन्त्रः--नास्ति एकं चित्तं येषां ते अनेकचित्ताः अस्थिरबुद्धयः तैः सह मन्त्रः मन्त्रणा यस्य । यद्वा अनेकचित्तः बहुभिर्ज्ञातः मन्त्रः यस्य । दैवचिन्तकः--दैवपरः । दुर्भिक्षव्यसनोपेतः—दुर्भिक्षं एव व्यसनं तेनोपेतः । बलव्यसनसंकुलः—बलस्य सैन्यस्य व्यसनं भेदादिकृतं तेन सङ्कुलः पीडितः । युक्तः कालेन न—विग्रहोचितकालेन न युक्तः । अकालयुद्धकारी । सत्यधर्मव्यपेतः—सत्यात् धर्माच्च व्यपेतः च्युतः । अल्पप्रभावत्वात् —अल्पः क्षुद्रः प्रभावः कोषदण्डजं तेजो यस्य तस्य भावस्तस्मात् । स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम् । इत्यमरः । उत्साहशक्तिहीनत्वात्—स्वविक्रमबलं उत्साहशक्तिः तया हीनः विरहितः तस्य भावः तस्मात् । शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । इत्यमरः । स्वैः—स्वपरिवारैः । आत्मसात्कृताः—स्ववशं नीताः स्वपक्षीयाः कृताः



---

१ गच्छान्ति. २ अथ हिरण्यगर्भः । ३ तान्विज्ञा० । ४ रोगः । ५ तथा दैवपरायणः इ० पा० ।

भीरुर्युद्धपरित्यागात्स्वयमेव प्रणश्यति ।
तथैव भीरुपुरुषैः[1] संग्रामे तैर्विमुच्यते ॥ ४३ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुयायिनः ।
लुब्धानुजीविकैरेष दानभिन्नैर्निहन्यते ॥ ४४ ॥
संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ४५ ॥
अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मंत्रिणाम् ।
अनवस्थितचित्तत्वात्कार्ये तैः स उपेक्ष्यते ॥ ४६ ॥
सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा ॥ ४७ ॥
संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन्नात्मानमपि चेष्टते[2] ॥ ४८ ॥
दुर्भिक्ष्यव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४९ ॥
अदेशस्थोहि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ५० ॥
बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवाशु विपद्यते ॥ ५१ ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५२ ॥
सत्यधर्मव्यपेतेन न संदध्यात्कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ५३ ॥

अपरमपि कथयामि । संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यम् । कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्च पञ्चाङ्गो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम् । एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः ।

---

सन्तः । असंविभागित्वात्—लोप्त्रं विभज्य इतरेभ्यो न ददातीति तस्य भावस्तस्मात् । अनवस्थितचित्तत्वात्—अनवस्थितं नैकत्र स्थितं चित्तं यस्य स तथाविधः तस्य भावस्तस्मात् । धर्मबलीयस्त्वात्—धर्मस्य बलीयस्त्वात् । अप्रतिहतप्रभावत्वात् । यद्वा धर्मेण पुण्येन बलीयांसः देवाः ब्राह्मणाश्च तेषां भावः तत्त्वात् । धर्मप्रधानानां देवब्राह्मणानां निन्दकः धर्मप्रभावादेव विशीर्यते इति भावः । अल्पीयान्—अतिशयेनाल्पः । लघुकायः हीनबलः वा । कौशिकेन—उलूकेन । हतज्योतिः—हतं ज्योतिः दृष्टिः यस्य । निशीथे—अर्धरात्रे । सान्धि०—सन्धिविग्रहौ व्याख्यातपूर्वौ । यानं—उपचितबलस्य शत्रोरवस्कन्दनाय यात्रा । आसनं—कालादिप्रतीक्षया विजिगीषोर्दुर्गादीन्वर्धयतः स्थितिः । संश्रयः—प्रबलस्याश्रयग्रहणम् । द्वैधीभावः—शाठ्यम् । षाड्गुण्यम्—षड्गुणाः । आरम्भोपायः—आरम्भस्य सम्यक्साधनम् । पुरुषद्रव्यसम्पत्—पुरुषाणां द्रव्याणां धनधान्यादिकानां च सम्पत् प्राचुर्यम् । देशकालविभागः—अनुकूलस्य कालस्य देशस्य च निर्णयः । समं विभक्तम्



१ वीरोऽप्यवीरपुरुषैः । इ० पा० । २ चेष्टयेत्.

या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदां वेश्म चञ्चलापि प्रधावति ॥ ५४ ॥

तथा चोक्तम्—

वित्तं यदा यस्य समं विभक्तं गूढश्च चारो निभृतश्च मन्त्रः ।
न चाप्रियं प्राणिषु यो ब्रवीति स सागरान्तां पृथिवीं प्रशास्ति ॥ ५५ ॥

किंतु देव यद्यपि महामन्त्रिणा गृध्रेण संधानमुपन्यस्तं तथापि तेन राज्ञा संप्रति भूतजयदर्पान्न मन्तव्यम् । तदेवं क्रियताम् । सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जम्बुद्वीपे कोपं जनयतु । यतः ।

सुगुप्तिमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिम् ।
संतापयेयेन समं सुतप्तस्तप्तेन संधानमुपैति तप्तः ॥ ५६ ॥

राज्ञा एवमस्तु इति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्वा सिंहलद्वीपं प्रस्थापितः । अथ प्रणिधिरागत्योवाच—देव श्रूयतां तत्रत्यः प्रस्तावः । एवं तत्र गृध्रेणोक्तम्—देव यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो राजा न वा इति । ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय पृष्टः—वायस कीदृशोऽसौ हिरण्यगर्भः । चक्रवाको मन्त्री वा कीदृशः । वायस उवाच—देव हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः । चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते । राजाह—यद्येवं तदा कथमसौ त्वया वञ्चितः । विहस्य मेघवर्णः प्राह—देव

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ५७ ॥

शृणु देव तेन मन्त्रिणाहं प्रथमदर्शन एव ज्ञातः । किंतु महाशयोऽसौ राजा । तेन मया विप्रलब्धः । तथा चोक्तम्—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स[1] तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा ॥ ५८ ॥

राजोवाच—कथमेतत् । मेघवर्णः कथयति—

## ॥ कथा ९ ॥

अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे धृत्वा गच्छन्धूर्तत्रयेणावलोकितः । ततस्ते धूर्ता यद्येष छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्तेन गच्छन्स ब्राह्मणोऽभिहितः—भो ब्राह्मण किमिति कुक्कुरः स्कन्धेनोह्यते । विप्रेणोक्तम्—नायं श्वा किंतु यज्ञच्छागः । अथानन्तरस्थेनान्येन धूर्तेन तथैवोक्तम् । तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः । यतः ।

---

यथायथं तुल्यतया विनियुक्तम् । उपन्यस्तम्–कर्तव्यत्वेन निर्दिष्टम् । कोपं–प्रकृतिक्षोभम् । सुगुप्तिम् सुष्ठु रक्षाम् । सुसंहतेन—सुसम्बद्धेन । येन इ०—येन शत्रुः समं आत्मतुल्यं सुतप्तः भवेत् । महाशयः—महान् आशयः मनः यस्य । महासत्वः । छागः—अजः । मतिप्रकर्षः—मतेः कपटबुद्धेः प्रकर्षः उत्कृष्टं उत्कर्षः प्रमाणं वा । दोलायमानमतिः—

---



१ शयः सत्यवाक् । २ अनुभूयते । ३ स एव वञ्च्यते तेन । ४ प्रान्तरवृक्ष० । ब्राह्मणस्य वर्त्मन्युपविश्य । ५ अनन्तरं पुनद्वितीयेन क्रोशमात्रान्तरस्थितेन तदेवोक्तम्

मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः ।
ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥ ५९ ॥

राजाह—कथमेतत् । स कथयति—

॥ कथा १० ॥

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः । तस्य सेवकास्त्रयः काको व्याघ्रो जम्बुकश्च । अथ तैर्भ्रमद्भिः सार्थाद्भ्रष्टः कश्चिदुष्ट्रो दृष्टः पृष्टश्च—कुतो भवानागतः । स चात्मवृत्तान्तमकथयत् । ततस्तैर्नीत्वा सिंहेऽसौ समर्पितः । तेनाभयवाचं दत्वा चित्र१कर्ण इति नाम कृत्वा स्थापितः । अथ कदाचित्सिंहस्य शरीरवैकल्याद्भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः । ततस्तै३रालो४चितम्—चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम् । किमनेन कण्टकभुजा । व्याघ्र उवाच स्वामिनाभयवाचं दत्वानुगृहीतस्तत्कथमेवं संभवति । काको ब्रूते—इह समये परिक्षीणः स्वामी पापमपि करिष्यति । यतः ।

त्यजेत्क्षुधार्ता महिला स्वपुत्रं खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ ६० ॥

अन्यच्च । मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः५ क्रुद्धो बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित् ॥ ६१ ॥

इति संचिन्त्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्—आहारार्थं किंचित्प्राप्तम् । तैरुक्तम्—यत्नादपि न प्राप्तं किंचित् । सिंहेनोक्तम्—कोऽधुना जीवनोपायः । काको वदति—देव स्वाधीनाहारपरित्यागात्सर्वनाशोऽयमुपस्थितः । सिंहेनोक्तम्—अत्राहारः कः स्वाधीनः । काकः कर्णे कथयति—चित्रकर्णः इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । अभयवाचं दत्वा धृतोऽयमस्माभिः । तत्कथमेवं संभवति । तथा च ।

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं सर्वेषु दानेष्वभयप्रदानम् ॥ ६२ ॥

अन्यच्च । सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।
तत्फलं लभ्यते सम्यग्रक्षिते७ शरणागते ॥ ६३ ॥

काको ब्रूते—नासौ स्वामिना व्यापादयितव्यः । किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति । सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः । ततोऽसौ लब्धावकाश८ कूटं कृत्वा सर्वानादाय सिंहान्तिकं गतः । अथ काकेनोक्तम् —देव यत्नादप्याहारो न प्राप्तः । अनेकोपवासखिन्नः स्वामी । तदिदानीं मदीयमांसमुपभुज्यताम् । यतः ।

---

संशयग्रस्तबुद्धिः । वनोद्देशे—वनप्रदेशे । शरीरवैकल्यात्—शरीरस्य दुःस्थित्या । शरीरक्लेशात् । व्यग्राः—व्याकुलाः । बुभुक्षितः क्षुधितः । मत्तः—मद्यादिना विकृतबुद्धिः । उन्मत्तः—वातादिपीडितः । सर्वकामसमृद्धस्य—सर्वैः कामैः अभीष्टैः समृद्धस्य सुसम्पन्नस्य । अखिलमनोरथपूरकस्य इति यावत् । लब्धावकाशः—सिंहस्य तूष्णींभावेनेति यावत् ।

---

१ वर्ण । २ भूतातिवृ० । ३ काकव्याघ्रगोमायुभिरा० । ४ लापि पु० । ५ आर्तः । ६ न गोप्रदानं न महीप्रदानं न चान्नदानं न तथात्मदानम् । इ० पा० ७ त्रस्ते रक्षि० इ० पा० । ८ अस्मात्परं—प्रकृतिः [illegible] गतायुषि ॥ अपि च इत्यधि० ।

स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।
समूलेषु हि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥ ६४ ॥

सिंहेनोक्तम्—भद्र वरं प्राणपरित्यागः न पुनरीदृशि कर्मणि प्रवृत्तिः । जम्बुकेनापि तथोक्तम् । ततः सिंहेनोक्तम्—मैवम् । अथ व्याघ्रेणोक्तम्—मद्देहेन जीवतु स्वामी । सिंहेनोक्तम्—न कदाचिदेवमुचितम् । अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह । तद्वदन्नेवासौ व्याघ्रेण कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितश्च । अतोऽहं ब्रवीमि—मतिर्दोलायते सत्यम् इत्यादि ॥ ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ । स छागस्तैर्धूर्तैर्नीत्वा भक्षितः । अतोऽहं ब्रवीमि—आत्मौपम्येन यो वेत्ति इत्यादि॥ राजाह—मेघवर्ण कथं शत्रुमध्ये त्वया चिरमुषितम् । कथं वा तेषामनुनयः कृतः । मेघवर्ण उवाच—देव स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते । पश्य ।

लोको वहति किं राजन्न मूर्ध्ना दग्धुमिन्धनम् ।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेला निकृन्तति ॥ ६५ ॥

तथा चोक्तम्—

स्कन्धेनापि वहेच्छत्रून्कार्यमासाद्य बुद्धिमान् ।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥ ६६ ॥

राजाह—कथमेतत् । मेघवर्णः कथयति—

## ॥ कथा ११ ॥

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः । सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः । ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च—किमिति त्वमाहारं नान्विष्यसि । सर्पोऽवदत्—गच्छ भद्र मम मन्दभाग्यस्य प्रश्नेन किम् । ततः संजातकौतुकः स च भेकः सर्वथा कथ्यताम् इत्याह । सर्पोऽप्याह—भद्र ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य पुत्रो विंशतिवर्षदेशीयः सर्वगुणसंपन्नो दुर्दैवान्मया नृशंसेन दष्टः । ततः सुशीलनामानं तं पुत्रं मृतमालोक्य मूर्छितः कौण्डिन्यः पृथिव्यां लुलोठ । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तत्रागत्योपविष्टाः । तथा चोक्तम्—

आहवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ६७ ॥

तत्र कपिलो नाम स्नातकोऽवदत्—अरे कौण्डिन्य मूढोऽसि । तेनैवं विलपसि । शृणु ।

---

कूटं–कपटम् । स्वामिमूलाः—स्वामी मूलः प्रधानाश्रयः यासाम् । प्रयत्नः—सिंचनादिना वर्धनोपायः । कुक्षिम्—उदरम् । वृक्षाङ्घ्रिं वृक्षस्य मूलम् । नदीवेला—नद्याः वेला नीरं । जलप्रवाह इत्यर्थः । 'वेला स्यात्तीरनीरयोः ।' इति विश्वः । 'नदीवेगः' इत्यपि पाठः । कार्यमासाद्य—कार्यं प्राप्य । कार्यवशादिति यावत् । अतिजीर्णतया–अतिवार्धक्येन । विंशतिवर्षदेशीयः—विंशतिवर्षकल्पः । आहवे युद्धे । स्नातकः—समाप्तवेदव्रतः ब्राह्मणः ।

---



१ ब्रूते. २ वृत्तान्तप्रश्नेन । ३ अत्र ब्रह्मपुर । ४ उत्सवे व्यसने ...

क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ ६८ ॥
क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६९ ॥

अपरं च । कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ७० ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ७१ ॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ७२ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ७३ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ ७४ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत्तद्वद् भूतसमागमः ॥ ७५ ॥

अन्यच्च । पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ७६ ॥
यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽपि निखन्यन्ते हृदये शोकशङ्कवः ॥ ७७ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ७८ ॥

अपि च । संयोगो हि वियोगस्य संसूचयति संभवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७९ ॥
आपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥ ८० ॥

अपरं च । व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ८१ ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ८२ ॥

---

क्रोडीकरोतीति–यदा यस्मात् जातं उत्पन्नं नरं अनित्यता नश्वरता धात्रीव उपमातेव प्रथमं क्रोडीकरोति आत्मसात्करोति । पक्षे अङ्के करोति । कः क्रमः—कः अवसरः । तस्मिन्न मुह्येत् मोहात्तस्मिन् आसक्तिं न कुर्यात् । समेयाताम्–यदृच्छया वाह्यमाने परस्परं संगच्छेयाताम् । यावतः–यत्संख्यकान् । अत्यन्तसंवासः सुचिरकालं सहवसतिः । अस्य समानार्थः श्लोकः रघुवंशे–स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा । इत्या० । आपातरमणीयानाम् । तत्कालसुरूपाणाम् । रात्र्यहनी–दिनयामिन्यौ । निवर्तेते इति शेषः । सुखास्वादपरः—सुखास्वादः सुखोपभोगः परः प्रधानः यस्मिन् । यद्वा सुखास्वादेन परः श्रेष्ठः । सत्समागमः–सद्भिः साधुभिः समागमः संगतिः प्रियसमागमो वा । वियोगावसानत्वात्–वियोगे विश्लेषे अवसानं समाप्तिर्यस्य तथाविधस्तत्त्वात् । वियोगासिलूनस्य–वियोग एव असिः खड्गस्तेन

अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८३ ॥

सुकृतान्येव कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८४ ॥

संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८५ ॥

यामेव रात्रिं प्रथमामुपैति गर्भे निवासं नरवीर लोकः ।
ततः प्रभृत्यस्खलितप्रयाणः स प्रत्यहं मृत्युसमीपमेति ॥ ८६ ॥

अतः संसारं विचारयतां शोकोऽयमज्ञानस्यैव प्रपञ्चः । पश्य ।

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥ ८७ ॥

तद्भद्रात्मानमनुसंधेहि । शोकचर्चां परिहर । यतः ।

अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधी ॥ ८८ ॥

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्–तदलमिदानीं गृहनरकवासेन । वनमेव गच्छामि । कपिलः पुनराह—

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ८९ ॥

यतः । दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ९० ॥

उक्तं च । वृत्यर्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्था च दुर्गाण्यपि तरन्ति ते ॥ ९१ ॥

---

लूनस्य विदारितस्य । सगरः–सूर्यवंशीयः कश्चिन्नृपः । उग्रदण्डम्–उग्रः दण्डः यस्य । विचक्षणस्य प्रकृष्टज्ञानवतोपि मनुष्यस्य प्रयत्नः । अस्खलितप्रयाणः–अस्खलितं संततं प्रयाणं मृत्युमार्गाक्रमणं यस्य । अज्ञानमिति–यदि शोकस्य अज्ञानं मोहः कारणं न स्यात् वियोग इष्टनाश एव कारणं स्यात्तर्हि दिनेषु गच्छत्सु शोकः वर्धतां वृद्धिं गच्छतु । वियोगकालवृद्धया इति यावत् । किंतु स तथा न वर्धते अपयाति अपक्षीयते । तस्मादज्ञानमेव शोककारणमिति भावः । आत्मानमनुसंधेहि–आत्मतत्त्वं विचारय । अकाण्डपातजातानाम्–अकाण्डे अकाले यः पातः । अतर्कितोपस्थितिरिति यावत् । तेन जातानां उत्पन्नानाम् । आर्द्राणाम्–प्रत्यग्राणाम् । प्रबुद्ध इव—जाततत्त्वावबोध इव । रागिणाम्–विषयोपभोगेच्छा चेत् इत्यर्थः । अकुत्सिते साधुभिरनिन्दिते श्लाघ्ये । यः प्रवर्तते तस्य निवृत्तरागस्य इति योजना । लिङ्गम्–दण्डादिलिङ्गधारणमात्रम् । अयं श्लोको मनुस्मृतेरुद्धृतः । तत्र ‘ दुःखित ’ इत्यस्य स्थाने ‘ दूषितः ’ इति पाठः । अ० ६. श्लो० ६६.

---

१ तद्भद्र । २ महौषधम् ।

तथा हि । आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुध्यति चान्तरात्मा ॥ ९२ ॥

विशेषतश्च । जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम्[1] ।
संसारमिममत्यन्तमसारं त्यजतः सुखम् ॥ ९३ ॥

यतः । दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ९४

कौण्डिन्यो ब्रूते—एवमेव । ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः यदद्यारभ्य मण्डूकानां वाहनं भविष्यसि इति । कपिलो ब्रूते—संप्रत्युपदेशासहिष्णुर्भवान् । शोकाविष्टं ते हृदयम । तथापि कार्यं शृणु ।

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९५ ॥

अन्यच्च । कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
मुमुक्षां प्रति कर्तव्यः सैव तस्य हि भेषजम् ॥ ९६ ॥

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान् । अतो ब्राह्मणशापान्मण्डूकान्वोढुमत्र तिष्ठामि । अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नः अग्रे तत्कथितम् । ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान् । स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम । परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत्—किमद्य भवान्मन्दगतिः । सर्पो ब्रूते—देव आहारविरहादसमर्थोऽस्मि । मण्डूकनाथोऽवदत्—अस्मदाज्ञया मण्डूकान्भक्षय । ततः गृहीतोऽयं महाप्रसादः इत्युक्त्वा क्रमशो मण्डूकान्खादितवान् । अथो निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः । अतोऽहं ब्रवीमि—स्कन्धेनापि वहेच्छत्रून् इत्यादि ॥ देव यात्विदानीं पुरावृत्ताख्यानकथनम् । सर्वथा संधेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः । राजोवाच—कोऽयं भवतो विचारः । यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्सेवया वसति तदास्ताम् । नो चेद्विगृह्यताम् ।

अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्—देव सिंहलद्वीपस्य सारसो राजा संप्रति जम्बुद्वीपमाक्रम्यावतिष्ठते । राजा ससंभ्रमं ब्रूते—किम् । शुकः पूर्वोक्तं कथयति । गृध्रः स्वगतमुवाच—साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ साधु साधु । राजा सकोपमाह—आस्तां तावदयम् । गत्वा तमेव समूलमुन्मूलयामि । दूरदर्शी विहस्याह—

---

संयमपुण्यतीर्था—संयमः इन्द्रियनिग्रहः एव पुण्यं पवित्रं तीर्थं जलावतारः यस्याः । तत्र तस्यां नद्याम् । आत्मतत्त्वे इत्यर्थः । अभिषेकं—स्नानम् । म० भा० उ० प० अ० ४०. २१. उपद्रुतम्—उपहतम् । ग्रस्तमिति यावत् । उपदेशासहिष्णुः—उपदेशः हितवाक्यं प्रबोधो वा तं न सोढुं शीलमस्य । कपिलोपदेशामृत०-कपिलस्य उपदेश एव अमृतं तेन प्रशान्तः शोकानलः शोकाग्निः यस्य । दण्डं गृहीतवान्-भैक्ष्यवृत्तिं स्वीचकार । चित्रपदक्रमम्-चित्रः पदक्रमः यस्मिन्कर्मणि तद्यथा तथा । परस्य



१ परिप्लुतम् इ० पा० ।

न शरन्मेघवत्कार्यं वृथैव घनगर्जितम् ।
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ९७ ॥

अपरं च । एकदा न विगृह्णीयाद्बहून्राजाभिघातिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम् ॥ ९८ ॥

देव किमिति विना संधानं गमनमस्ति । यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्यः । अपरं च ।

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ॥
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा ॥ ९९ ॥

राजाह—कथमेतत् । दूरदर्शी कथयति—

## ॥ कथा १२ ॥

अस्त्युज्जयिन्यां माधवो नाम विप्रः । तस्य ब्राह्मणी प्रसूता । सा बालापत्यस्य रक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता । अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम् । तच्छ्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—यदि सत्वरं न गच्छामि तदा तत्रान्यः कश्चिच्छ्राद्धं ग्रहीष्यति । यतः ।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ १०० ॥

किंतु बालकस्यात्र रक्षको नास्ति । तत्किं करोमि । यातु । चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालकरक्षार्थं व्यवस्थाप्य गच्छामि । तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन्कृष्णसर्पो दृष्ट्वा व्यापादितः खण्डितश्च । ततोऽसौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपगम्य तच्चरणयोर्लुलोठ । ततः स विप्रस्तथाविधं तं दृष्ट्वा बालकोऽनेन खादित इत्यवधार्य नकुलं व्यापादितवान् । अनन्तरं यावदुपसृत्यापत्यं पश्यति ब्राह्मणस्तावद्बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति । ततस्तमुपकारकं नकुलं निरीक्ष्य भावितचेताः स परं विषादमगमत् । अतोऽहं ब्रवीमि—योऽर्थतत्त्वमविज्ञाय इत्यादि ॥

अपरं च । कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नरः ॥ १०१ ॥

राजाह—मन्त्रिन् एष ते निश्चयः । मन्त्री ब्रूते—एवमेव । यतः ।

स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमा गुणाः ॥ १०२ ॥

तथा च । सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ १०३ ॥

---

इ०—महान् महामतिः पण्डित इत्यर्थः । अर्थं अनर्थं च इष्टानिष्टं परस्य न प्रकाशयति । अन्यस्मै न कथयति । यद्वा चिकीर्षितं परस्य अर्थं अनर्थं वा न प्रकाशयति । सर्वं सुगुप्तं करोतीति भावः । अभिघातिनः-अभियोक्तॄन् । पार्वणश्राद्धम्—पर्वणि कृतं श्राद्धम् । भावितचेता—भावार्द्रहृदयः । परमार्थेषु—गुरुकार्येषु । वितर्कः--ऊहनम् । ज्ञाननिश्चयः—ज्ञानेन अनुष्ठेयस्य सम्यक्पर्यालोचनेन निश्चयः परिच्छेदः ।

